# ओलम्पिकप्रश्नस्पर्धा

विशेषपारितोषिकम्



'एसर्'सङ्गणकम्

न्यूट्रिन्चन्दमामा-ओलम्पिक्-प्रश्नस्पर्धा मेमासतः आरब्धा, षट् मासान् यावत् प्रचलिष्यति च । अधः दत्ताः क्रीडासम्बद्धाः प्रश्नाः भवतां ज्ञानम् अभिरुचिं च वर्धयिष्यन्ति । अधः स्थिते प्रश्नपत्रे समुचितानि उत्तराणि विलिख्य पञ्चभिः 'न्यूट्रिन् चोकलेट् एक्लियर्स्'-आवरणैः सह अन्तिमदिनाङ्कात् पूर्वं **Nutrine Chandamama Contest, Chandamama India Limited No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097** इत्येतस्मै सङ्केताय प्रेष्यन्ताम् ।

प्रथमपारितोषिकाणि



चित्रग्राहकाणि

द्वितीयपारितोषिकाणि



गणकयन्त्राणि

एषा अखिलभारतीयस्पर्धा । प्रतिमासम् एतस्मिन् पत्रे उत्तरं लिखित्वा प्रेषणेन स्पर्धायां भागः उह्यताम् । प्रतिमासं प्रथमपारितोषिकाणि - ३ कोनिकाचित्रग्राहकाणि । द्वितीयपारितोषिकाणि - १० गणकयन्त्राणि । तृतीयपारितोषिकाणि - ५० न्यूट्रिन्मधुरपुटकाः । पञ्चानां मासानाम् अनन्तरं षष्ठस्पर्धायां विशेषपारितोषिकत्वेन 'एसर्'सङ्गणकं दास्यते । तस्मिन् मासे अन्यानि सामान्यपारितोषिकाणि अपि भवन्ति एव । षट्सु मासेषु स्पर्धायां भागम् ऊढवन्तः सर्वे विशेषपारितोषिकप्राप्तये अर्हाः । विशेषपारितोषिकं प्राप्तवते डिसेम्बर्मासे सूचना प्रेषयिष्यते ।

### किं भवन्तः जानन्ति ?



इथियोपियादेशीयः अबेबे बिकिलः रोम-ओलम्पिक्स्पर्धासु (१९६०) मेरथान्-स्वर्णं प्राप्तवान् पादरक्षां विनैव धावन् । पुनरपि टोकियोनगरे (१९६४) मेरथान्स्वर्णं सम्पादितवान् सः मेरथान्स्वर्णद्वयं प्राप्तवत्सु प्रथमः जातः ।

## न्यूट्रिन्चन्दमामा-ओलम्पिक्प्रश्नस्पर्धा - ३

सावधानतया अधः दत्तान् सर्वान् प्रश्नान् पठित्वा प्रतिप्रश्नम् उत्तरलेखनाय कल्पिते स्थले समुचितस्य उत्तरस्य पुरतः (✔) चिह्नम् अङ्कयन्तु ।

१. स्वर्णपदकं प्राप्तवते देशाय प्रतिस्वर्णपदकं कति अङ्काः दीयन्ते ?

☐ पञ्च ☐ त्रयः ☐ द्वौ

२. काचित् स्पर्धा १९२० तमवर्षपर्यन्तम् आसीत्, सा १९७२ तमे वर्षे म्युनिच्-ओलम्पिक्स्पर्धावसरे पुनः आरब्धा । का सा ?

☐ बाक्सिङ्ग् ☐ जिम्नास्टिक्स् ☐ आर्चरी

३. १९९६ तमे वर्षे अटलाण्टा-ओलम्पिक्स्पर्धायाम् अमेरिकादेशेन कति स्वर्णपदकानि प्राप्तानि ?

☐ ४४ ☐ ४८ ☐ ५२

४. ओलम्पिक्स्पर्धासु पुरुषीयायां शतमीटरात्मिकायां धावनस्पर्धायां केन विश्वविक्रमः साधितः ?

☐ मेकेल् जानसनेन ☐ डोनावन् बेलिना ☐ सयद् अवटेन

५. एतस्य मासस्य न्यूट्रिन्विज्ञापिकायां 'C' इत्येवत् आंग्लाक्षरं कतिवारम् आवृत्तम् ?

☐ दशवारम् ☐ षोडशवारम् ☐ द्वादशवारम्

**स्पर्धानियमाः** - ● न्यूट्रिन्-चन्दमामासंस्थयोः उद्योगिनः तेषां बान्धवाः वा स्पर्धायां भागवहनाय अनर्हाः । ● न्यूट्रिन्संस्था निर्णायकानां चयने पूर्णाधिकारम् अर्हति । ● भारते जाताः ऊनपञ्चदशवर्षीयाः बालाः स्पर्धायां भागं वोढुम् अर्हाः । ● स्पर्धादिनाङ्कस्य विस्तारे सङ्कोचे च न्यूट्रिन्जनानाम् एव अन्तिमः अधिकारः । ● भागग्राहिणः वयसः दृढीकरणाय जन्मदिनाङ्कप्रमाणपत्रं दद्युः । ● समुचितोत्तरदातारः बहवः सन्ति चेत् 'लाटरी'पद्धत्या पारितोषिकार्हाणां चयनं करिष्यते । ● पारितोषिकभाजः पत्रेण सूच्यन्ते । ● पारितोषिकं वस्तुरूपेणैव, न तु धनरूपेण । ● पारितोषिकरूपेण दत्तानां वस्तूनां 'वारण्टी' निर्मातृसंस्थाधीनम् । ● एकः एव प्रतिमासम् अपि भागं ग्रहीतुम् अर्हति । ● षट्सु मासेषु कस्मिंश्चित् एकस्मिन् एव भागग्रहणम् अपि शक्यते । ● पत्रव्यवहारस्य न अवकाशः । ● स्पर्धापत्रं प्रेषितम् इत्यस्य तात्पर्यं यत् स्पर्धानियमाः सर्वे अङ्गीकृताः इति । ● अन्तिमदिनाङ्कानन्तरं प्राप्तं प्रवेशपत्रं स्पर्धायै न परिगण्यते । ● समुचितम् उत्तरं केनापि न दत्तं चेत् अल्पदोषयुक्तानि पत्राणि पारितोषिकाय परिगण्यन्ते । ● निर्णायकानां निर्णयः एव अन्तिमः ।

**अन्तिमः दिनाङ्कः - ३१, जुलै - २००४**



नाम ..............................................................

वयः .................. कक्ष्या .................. जन्मदिनाङ्कः ..................

गृहसङ्केतः (पिन्कोड्सहितः) ..............................................

..............................................................

हस्ताक्षरम् ..............................................

## एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ जुलै - २००४ सञ्चिका - ४

















## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers
Colony, Ekkatuthangal,
**CHENNAI - 600 097**
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १४४/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश (M.O.) द्वारा वा
**'Chandamama India Limited'** नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# राष्ट्रैक्यवर्धने उपकारकम्

ओलम्पिक्क्रीडायाः इतिहासे ऐदम्प्राथम्येन ओलम्पिक्ज्योतिषः स्वीकाराय सञ्चारणाय च भारतदेशः अपि चितः अस्ति । एषा ऐतिहासिकी घटना जून्मासस्य दशमे दिनाङ्के प्रवर्तिष्यते देहलीनगरे । एतत् ज्योतिः शान्तिसन्देशस्य प्रमुखं वाहकम् । 'ज्योतिः सञ्चारयत, जगन्मैत्रीं वर्धयत' इत्येषः सन्देशः प्रसार्यमाणः अस्ति एतस्य वर्षस्य ज्योतिषा ।

देशानां मैत्र्याः वर्धने क्रीडानां प्रमुखं स्थानम् । विविधदेशीयाः क्रीडापटवः क्रीडाङ्गणे मैत्रीपूर्वकस्पर्धया भागं वहन्तः मैत्रीभावम् उपबृंहयन्ति ।

प्राचीने काले रणाङ्गणं परित्यज्य क्रीडाङ्गणे भागं ग्रहीतुं न शक्नुवन्ति स्म देशाः । यदा शान्तिस्थितिः स्यात् तदा एव खलु एतत् सम्भवेत् ? अतः एव ओलम्पिक्क्रीडाः आरब्धाः ।

भारते अपि क्रीडानां विषये अधिकमहत्त्वदानबुद्धिः दृश्यते एषु दिनेषु । क्रीडानां विकासाय, क्रीडासु तरुणानां प्रवर्तनाय च देशे राज्ये च पार्थक्येन सचिवालयः एव संस्थापितः दृश्यते ।

जून्मासस्य दशमे दिनाङ्के ओलम्पिक्ज्योतिषः भारतीयज्योतिः प्रवर्त्यते । ततः शतशः ज्योतींषि प्रज्वाल्यन्ते । तानि देशस्य सर्वाणि नगराणि प्रति गच्छन्ति, भारतीयानां हृदयेषु ऐक्यभावं वर्धयन्ति च । एवम् ओलम्पिक्ज्योतिः राष्ट्रैक्यवर्धने उपकारकं भवति ।

भारतस्य बाहुबलिनः क्रीडापटवः च ओलम्पिक्स्तरं सम्पादितवन्तः दृश्यन्ते एतावता एव । अगस्ट्मासस्य त्रयोदशे दिनाङ्के ओलम्पिक्ज्योतिः प्रवर्तिष्यते, पञ्चदश दिनानि यावत् तत् स्थास्यति च । तस्मिन् कालखण्डे भारतीयैः क्रीडापटुभिः कीदृशं सामर्थ्यं दर्शयिष्यते इति तु प्रतीक्षणीयम् अस्माभिः । कोटिशः वाचकानां प्रतिनिधीभूय चन्दमामा तेभ्यः शुभम् आशंसति ।

*सम्पादकः* – **विश्वम**





## वाचकानां कृते कथास्पर्धा (फेब्रवरी)

# चिता पूरिता कथा



स्वामिना पृष्टः नारायणः अवदत् - ''श्रीमन् ! तस्य हारस्य विषयम् अहं पूर्णतः जानामि, स च इदानीं स्वामिन्याः वशे अस्ति'' इति । आश्चर्यं प्राप्तवान् रामतीर्थः पत्नीं पृष्टवान् ।

'हारः मत्समीपे एव अस्ति इति तु सत्यम् एव' इति उक्तवती सा । 'यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण वदतु' इति स्वामिना सूचितः नारायणः अवदत् - ''सर्वं विस्तरेण वदिष्यामि । तदर्थं गृहस्य सर्वान् सेवकान् एकत्र मेलयतु'' इति ।

यदा सर्वे सेवकाः सम्मिलिताः, तदा तेषां पुरतः नारायणः स्वामिनम् अवदत् - ''प्रतिदिने इव गते मङ्गलवासरे अपि अहं स्वामिन्याः प्रकोष्ठस्य स्वच्छतार्थं गतवान् । स्वच्छतासमये मया कयोश्चित् मन्दस्वरेण सम्भाषणं श्रुतम् । अवधानेन श्रवणात् मया अवगतं यत् तत् सम्भाषणं सुरेन्द्रविरजयोः इति । तौ वदतः स्म - 'नारायणः सर्वथा अविवेकी । सः प्रतिदिनं स्वामिन्याः प्रकोष्ठे वज्रहारं दृष्ट्वापि तस्य स्वीकारे मतिं न करोति । अद्य आवां सायं पञ्चवादने तं हारं चोरयाव, अपवादस्तु नारायणेन प्राप्यते' इति । एतत् श्रुत्वा अहम् आश्चर्यचकितः । झटिति एव हारम् अन्यत्र स्थापयित्वा अहं स्वामिनीं प्रवृत्तं सर्वम् अवदम् । सायम् अहं स्वामिनी च जवनिकायाः पृष्ठतः स्थित्वा सर्वं परिशीलितवन्तौ । पञ्चवादने सुरेन्द्रविरजौ तत्र आगतौ, हारं कुत्रापि अप्राप्य मौनेन प्रतिगतौ च । मम अनुरोधात् स्वामिनी तौ न गृहीतवती, न वा चौर्यवार्तां भवन्तम् उक्तवती । सर्वं भवता अपि स्पष्टतया अवगतं भवतु इत्यतः मया एवं कृतम्'' इति ।

नारायणस्य एतत् कथनं श्रुतवतोः सुरेन्द्रविरजयोः मुखं विच्छायं जातम् । तौ उभौ अपि अनन्यगतिकतया स्वस्य अपराधम् अङ्गीकृतवन्तौ । रामतीर्थः तौ उद्योगात् च्यावितवान्, नारायणं च प्रीत्या आलिङ्गितवान् ।

'नारायणस्य ऋजुतां दृष्ट्वा पारितोषिकरूपेण नाणकं यत् दत्तं तत् सर्वथा समुचितम् एव जातम्' इति अचिन्तयत् सः ।

**प्रेषकः** - *अमितकुमारः, S/o श्री रामवृक्षप्रसादः, राम-आशासदनम्, सर्वोदयनगरम्, (नलकूपभवनस्य पूर्वदिशि) पोस्ट् - शास्त्रिनगरम्,* **पटना** - *८०००२३ (बिहार)*



# भूसुरस्य औषधस्यूतः

अर्कावतीनामके ग्रामे गोविन्दः नाम कश्चन गायकः वसति स्म । सः उत्सवदिनेषु शिवमन्दिरे गायन् जनान् भक्तिसागरे मज्जयति स्म । तस्य गानं श्रुत्वा जनाः वदन्ति स्म - ''अहो ! कीदृशं सुमधुरं गानम् एतस्य ! अहो, कीदृशः कण्ठध्वनिः ! यदि एषः राजाश्रयं प्राप्नुयात् तर्हि अस्माकं ग्रामस्य नाम ख्यातं भवेत्'' इति ।

एतादृशं वचनं श्रुत्वा गोविन्दः विनयेन वदति स्म - ''अहं शिवस्य सेवां कुर्वन् इदानीं सन्तोषेण जीवामि । भगवतः कृपायाः प्राप्तिमात्रेण राजाश्रयः न प्राप्यते । राजाश्रय-प्राप्त्यर्थं प्रतिभा प्रयत्नः चेति उभयम् अपि आवश्यकम् । मयि तु न विशिष्टा प्रतिभा, न वा मम महाप्रयत्नः । अतः राजाश्रय-प्राप्तिस्वप्नः मम पुरतः नास्ति । शिवस्तोत्र-गानतः मम मनः प्रसन्नं भवति । एतावता अहं सन्तृप्तः अस्मि । अतः राजाश्रयप्राप्त्यर्थं मया प्रयासः न करिष्यते'' इति ।

महाशिवरात्रिः आगता । तदवसरे ग्रामे नव दिनानि यावत् विविधाः कार्यक्रमाः प्रवर्तन्ते स्म । एतस्मिन् कार्यक्रमे भागं वोढुम् आगतस्य भूसुरस्य परिचयः प्राप्तः गोविन्देन । भूसुरः विदूषकः सन् जनानां मनः रञ्जयन् जीवनं यापयति स्म ।

भूसुरस्य वेषः विलक्षणः आसीत् । सः हस्तेन एकं वक्रं दण्डं धरति स्म । सदा ऊर्णकम्बलम् अपि धरति स्म । काकपिच्छेन युक्तं शिरस्त्रं तस्य शिरसि शोभते स्म । मुखे पीततिलकं विलसति स्म । विनोदजनकेन व्यवहारेण, तादृशैः एव वचनैः च सः जनान् रञ्जयति स्म । क्वचित् तस्य वचनानि उन्नत-विचारेण पूर्णानि भवन्ति स्म । तानि श्रुत्वा अपि जनाः तात्पर्यम् अवगन्तु न शक्नुवन्ति स्म ।

कदाचित् भूसुरः गोविन्दम् अवदत् - ''भवान् बहुसम्यक् गायति । भवतः कण्ठ-ध्वनिः नितरां सुमधुरः । मम वेषभूष-

वचनादिकं जनान् हासयति, भवतः सङ्गीतं तु अलौकिकम् आनन्दं दातुम् अर्हति । किमर्थं भवता ग्राममात्रे गीयते ? अन्यत्र गत्वा किमर्थं स्वस्य प्रतिभा न प्रदर्श्यते ? राजाश्रयार्थं किमर्थं प्रयासः न क्रियते ? प्रतिभावतः भवतः कारणतः एतस्य ग्रामस्य नाम सुविख्यातं भवेत्'' इति ।

तदा गोविन्दः अवदत् - ''अहं भक्तिगीतमात्राणि जानामि । मया सङ्गीतं किञ्चिदेव ज्ञायते । राजास्थाने यः प्रवेशम् इच्छति तेन सर्वविधानि गीतानि अपि गातव्यानि भवन्ति । सङ्गीते विशेषपरिश्रमः कृतः भवेत् । उत्तमसङ्गीतनिपुणत्वेन यस्य कीर्तिः प्रसृता भवति सः एव राजाश्रयं प्राप्तुम् अर्हति । राजाश्रयप्राप्तिः कश्चन सरलः विषयः न । मत्कारणतः ग्रामस्य ख्यातिः भवेत् इत्यस्ति चेत् तदर्थं भगवतः कृपा अपि आवश्यकी । इन्द्रजालद्वारा न सम्भवति एतत्'' इति ।

एतत् श्रुत्वा हसन् अवदत् भूसुरः - ''न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः इति वचनं भवता अपि श्रुतं स्यादेव । प्रयत्नः कृतः चेदेव खलु फलं प्राप्यते ? तीर्थपुरस्य नाम भवता अपि श्रुतं स्यात् । तत्र मासं यावत् उत्सवः प्रचलिष्यति । इतः नातिदूरे अस्ति तत् नगरम् । अहम् अद्यैव तत्र गच्छन् अस्मि । भवान् द्वित्रदिनाभ्यन्तरे तत्र आगच्छतु । तस्मिन् उत्सवे बहवः भूस्वामिनः भागं वहन्ति । भवतः सङ्गीतं श्रुत्वा तेषु कोऽपि आश्रयदाने मतिं कुर्यात् । उत्तमगायकत्वेन भवतः ख्यातिः अपि सर्वत्र प्रसृता भवेत्'' इति ।



गोविन्दः तीर्थपुरं स्मरन् अवदत् - ''मया अपि तीर्थपुरविषयः श्रुतः एव । तत्रत्या देवी दुर्गा प्रसिद्धा खलु ? मृतानाम् आत्मनः शान्तये, भूतप्रेतादिभ्यः आत्मनः रक्षणाय च जनाः तस्याः पूजां कुर्वन्ति । सा भक्तानाम् अभीष्टं पूरयति इति जनानां दृढः विश्वासः अस्ति । मया बहोः कालात् पूर्वं कदाचित् तत्र गतम् आसीत्'' इति ।

''इदानीं पुनरपि तत् नगरं गच्छतु । भवतः भाग्योदयः भवेत् तत्र'' इति वदन् भूसुरः पेटिकायाम् एकं चर्मस्यूतं स्थापितवान् । तं दृष्ट्वा कुतूहलेन पृष्टवान् गोविन्दः - ''किं तत् ?'' इति ।

भूसुरः चर्मस्यूततः कानिचन औषधानि निष्कास्य एकैकं दर्शयन् अवदत् - ''एतत् उदरवेदनायाः निवारणार्थम् । एतत् शिरो-



अनन्तरदिने एव सः तीर्थपुरं प्रति प्रस्थितवान् । तीर्थपुरं प्राप्तवान् सः दुर्गामन्दिरमण्डपं प्रति गतवान् । तत्र भूस्वामिनः गृहस्य जनाः केचन सुखासने उपविष्टवन्तः आसन् । ते आनन्देन उच्चैः हसन्ति स्म । जनाः अपि हासे निमग्नाः आसन् ।

तेषां पुरतः भूसुरः वानरः इव व्यवहरन् आसीत् । सः स्वस्य उदरं गृहीत्वा - ''अहो, महती उदरवेदना, सोढुं न शक्यते'' इति उक्त्वा शिरः गृहीत्वा - ''एषा शिरोवेदेना मां मारयति'' इति वदति स्म । 'ज्वरजनितः स्वेदः माम् आर्द्रीकृतवान् अस्ति । मम औषधस्यूतः कुत्र इति ज्ञायते । भगवति दुर्गे ! मयि कृपां करोतु । मां रक्षतु'' इति वदन् आक्रन्दनं कुर्वन् आसीत् सः ।

भ्रमणस्य निवारणार्थम् । एतत् ज्वरस्य चिकित्सार्थम् । प्रयाणे कः रोगः कं कदा बाधते इति न ज्ञायते । अतः अहं प्रयाणसमये आत्मना सह एतानि औषधानि सदा नेष्यामि'' इति । ततः सः तानि औषधानि चर्मस्यूते स्थापयित्वा तं स्यूतं पेटिकायां निक्षिप्तवान् ।

एतदनन्तरं सः अन्यैः कलाकारैः सह धर्मशालातः निर्गत्य ततः अग्रे गतवान् ।

तस्य निर्गमनस्य अनन्तरं धर्मशालायां गोविन्दस्य दृष्टिः चर्मस्यूते पतिता । तं चर्मस्यूतं भूसुराय दातुं गोविन्दः मार्गम् आगतवान् । किन्तु तावता भूसुरः ततः सुदूरं निर्गतः आसीत् ।

'भवतु नाम, तीर्थपुरे सः मिलेत् एव । तदा एतं स्यूतं तस्मै दास्यामि' इति चिन्तयित्वा गोविन्दः स्यूतेन सह स्वगृहं गतवान् ।

भूसुरस्य दर्शनात् एव गोविन्दः अवगतवान् यत् एषः जनानां रञ्जनाय एवं वदन् नास्ति, वस्तुतः अपि अयं शिरोवेदनया उदरवेदनया च पीडितः अस्ति इति ।

अतः सः झटिति तस्य समीपं गत्वा - ''भोः, स्वीकरोतु एतं भवतः औषधस्यूतम् । कस्य निमित्तं किम् औषधं दातव्यम् इति अहं न जानामि । भवान् एव स्वयम् औषधं स्वीकरोतु'' इति उक्त्वा औषधस्यूतं तस्मै दत्तवान् ।

इदानीं भूस्वामिप्रभृतिभिः अवगतं यत् भूसुरः अभिनयं कुर्वन् नास्ति, महती उदरवेदना तं बाधते इति । भूसुरः स्यूतात् औषधं स्वीकृत्य मुखे स्थापयित्वा हस्तसङ्केतेन सूचितवान् यत् जलम् आवश्यकम् इति ।

जनेषु कश्चित् झटिति जलम् आनीय

दत्तवान् । भूसुरः तत् पीत्वा तत्रैव भूमौ उपविष्टवान् ।

वस्तुस्थितिं ज्ञातवान् भूस्वामी भूसुरम् अवदत् – ''भोः, भवतः अभिनयः अपूर्वः एव । अभिनयस्य वास्तविकतायाः च भेदम् अजानन्तः वयं भवतः वेदनाकाले अपि हसन्तः एव आस्म'' इति ।

तदा भूसुरः उत्थाय गोविन्दं प्रदर्शयन् अवदत् – ''प्रभो ! एषः अर्कावतीनामके ग्रामे निवसति । सर्वदा तत्रत्ये मन्दिरे गायति । उत्सवदिनेषु एतस्य गानकार्यक्रमः भवति । उत्तमः गायकः एषः । एतस्य नाम गोविन्दः इति । अद्य दुर्गामन्दिरस्य पुरतः एषः गास्यति । भवता अपि एतस्य गानं श्रोतव्यम् इति मम नम्रा प्रार्थना'' इति ।

भूस्वामी एतत् निवेदनम् अङ्गीकृतवान् । तस्मिन् दिने भक्तिपूर्णतया गीतानां गोविन्दस्य गीतानां श्रवणेन भूस्वामी नितरां सन्तुष्टः जातः । गोविन्दस्य स्वरमाधुर्यं तदीयं चित्तम् अहरत् ।

सः तत्रैव घोषितवान् यत् एषः गोविन्दवर्यः इतः परं मम आस्थानस्य गायकः भविष्यति इति । उपायनरूपेण तस्मै उत्तमा कृषिभूमिः दत्ता तेन । भूसुराय अपि योग्यम् उपायनं प्रदत्तम् ।

भूसुरस्य हस्तौ गृहीत्वा अवदत् गोविन्दः – ''भवतः उपकारम् आजीवनं स्मरिष्यामि अहम्'' इति ।

''मया महान् उपकारः कोऽपि न कृतः । वस्तुतः तु भवता एव महान् उपकारः कृतः । मम प्राणाः रक्षिताः भवता । मया विस्मृतः स्यूतः यदि भवता आनीय दत्तः न स्यात् तर्हि मम दुरवस्था एव अभविष्यत् । अतः अहम् एव भवद्विषये अधमर्णः अस्मि । भूस्वामिनः मेलनम्, आस्थानगायकत्वेन भवतः नियुक्तिः च भगवत्याः दुर्गायाः अनुग्रहात् एव सम्पन्नम् । यस्मिन् देवे भवतः अचलः विश्वासः अस्ति सः एव एतत्सर्वं कारितवान् । वयं सर्वे निमित्तमात्रभूताः'' इति उक्तवान् भूसुरः ।

गोविन्दस्य नेत्राभ्यां कृतज्ञतासूचकानि आनन्दाश्रूणि निर्गतानि । 'भगवतः कृपा यदि स्यात् तर्हि लोके असम्भवं किमपि नास्ति' इति अचिन्तयत् सः ।



# कटुवचनस्य श्रोतुः दुःखम्

शाकवणिजः गङ्गाधरस्य आपणे सत्यराजः नाम तरुणः उद्योगे नियुक्तः । सः कार्यं तु श्रद्धया करोति स्म । गङ्गाधरस्य प्रशंसा अपि तेन प्राप्ता । किन्तु कार्यकाले तस्यः कोपः अधिकः आसीत् । यदि ग्राहकः मूल्यविषये अधिकचर्चां कुर्यात् तर्हि एषः वदति स्म - ''भोः, गच्छतु रे । भवान् वाणिज्यं न जानाति'' इति ।

क्रोधः परित्यक्तव्यः इति गङ्गाधरः तं बहुधा बोधितवान् । तथापि सत्यराजेन स्वस्य स्वभावः न परवर्तितः । कदाचित् वीरभद्रनामकस्य ग्रामप्रमुखस्य गृहस्य सेविका शाकक्रयणाय आपणम् आगता । सत्यराजः तां बहुधा तर्जितवान् । एतत् ज्ञातवान् वीरभद्रः गङ्गाधरं सम्यक् तर्जितवान् । तस्मात् गङ्गाधरः सत्यराजम् उद्योगात् निष्कासितवान् ।

नितरां खिन्नः सत्यराजः दिनद्वयस्य अनन्तरं गङ्गाधरसमीपम् आगत्य उद्योगं प्रार्थितवान् । तदा गङ्गाधरः - 'रे, गच्छ रे, मूर्ख ! किमर्थम् आगतम् अत्र ?' इति सम्यक् तर्जितवान् । एतत् श्रुतवतः सत्यराजस्य नेत्राभ्याम् अश्रूणि आगतानि । सः म्लानमुखः सन् ततः प्रस्थितः । तदा गङ्गाधरः तम् आहूय अवदत् - ''अयि सत्यराज ! आगच्छतु अत्र'' इति ।

सत्यराजः प्रत्यागत्य गङ्गाधरस्य पुरतः अतिष्ठत् । तदा गङ्गाधरः मधुरस्वरेण अवदत् - ''इदानीं भवता अवगतं खलु - कटुवचनकथनात् कः परिणामः भवति इति ? यदि कश्चित् अपमानितः स्यात् तर्हि तस्य कियान् खेदः भवेत् इति ज्ञातं खलु ?'' इति ।

तदा सत्यराजः स्वस्य व्यवहारस्य विषये पश्चात्तापम् अनुभवन् विनयेन करौ योजयित्वा गङ्गाधरम् अवदत् - ''कटुवचनस्य श्रोतुः कष्टं कीदृशम् इति मया अद्य अवगतं श्रीमन् !'' इति ।

''भवतु । अद्य आरभ्य पुनरपि भवान् मम आपणे कार्यं करोतु'' इति अवदत् गङ्गाधरः ।





# भल्लूकमान्त्रिकः

## ७

*[अरण्ये लुण्ठाकनायकः नागमल्लः दुर्मुखराजं बन्दीकृतवान् । तदा राजा स्वस्य नाम दुर्जयगुप्तं निर्दिश्य ततः पलायनं कर्तुम् इष्टवान् । तस्य वचने विश्वासम् अकुर्वन् नागमल्लः तं स्वस्य गुहां प्रति नीतवान् । वधकः भल्लूकः तत्र उपस्थाय यावत् गुहाद्वारम् उद्घाटयितुं प्रयासरतः अभवत् तावता उग्रदण्डः नाम राक्षसः तत्र उपस्थितः । वधकभल्लूकः तस्य संहाराय मतिं कृतवान् । तदनन्तरम्.......]*

परशुं हस्तेन गृहीत्वा अग्रे आगच्छन्तं वधकभल्लूकं दृष्ट्वा उग्रदण्डः क्षणकालं स्तब्धः जातः । वधकभल्लूकस्य वचनं तस्य हृदये सकृत् कम्पनम् उदपादयत् अपि । क्षणानन्तरम् आत्मनि धैर्यं प्रपूर्य शिलागदाम् उन्नीय सः गर्जितवान् – "अये क्षुल्लकजन्तो, मानवभल्लूक ! तिष्ठतु तावत् । कियत् धाष्टर्यं भवतः ?" इति ।

तदा वधकभल्लूकः क्षणं यावत् गमनं स्थगयित्वा उग्रदण्डं क्रोधेन पश्यन् अवदत् – "अये उग्रदण्ड ! आत्मनः राक्षसत्वकारणतः महान् अहङ्कारः भवतः । मम पुरतः भवतः एषः अहङ्कारः स्थातुं न अर्हति । अतः एव भवतः हस्तौ पादौ च कम्पन्ते" इति ।

तदा उग्रदण्डः क्रोधं प्राप्य पादेन भूमिं सकृत् सन्ताड्य अवदत् – "भवतः दर्शनात् नाहं किञ्चिदपि भीतः । भवति घृणा मम । मम हस्तौ पादौ च कम्पन्ते यत् तस्य कारणं



क्रोधः, न तु भीतिः । भवतः एतत् विकृतं रूपं हास्यास्पदम् । भवान् मानवः उत पशुः ?'' इति ।

एतत् श्रुत्वा वधकभल्लूकः स्वस्य परशुना पार्श्वस्थां शिलां सकृत् प्रहृत्य - ''अये मूर्ख ! भल्लूकमान्त्रिकेण सृष्टं महाशक्तिमन्तं वधकभल्लूकं मां किम् उपहसति भवान् ? एषोऽहं भवन्तं संहृत्य भूमौ पातयिष्यामि'' इति क्रोधेन अगर्जत् ।

वधकभल्लूकस्य प्रहारात् आत्मानं रक्षन् सालवृक्षस्य अधः स्थित्वा उग्रदण्डः अवदत् - ''वधकभल्लूक ! शान्तः भवतु भवान् । आवां परस्परकलहेन व्रणितौ संहृतौ वा यदि स्याव तर्हि एतस्य लाभः कस्य भवेत् इति किं भवता चिन्तितम् ?'' इति ।

एतस्य श्रवणात् वधकभल्लूकः आगमनस्य उद्देश्यं झटिति स्मृतवान् । 'मया तु उदयगिरेः राज्ञः दुष्टस्य दुर्मुखस्य संहाराय आगतम् अत्र । तत् कार्यं समाप्य मया भल्लूकमान्त्रिकः द्रष्टव्यः अस्ति । एवं स्थिते एतेन उग्रदण्डेन सह कलहः समयव्यर्थतामात्राय एव भवेत्' इति अचिन्तयत् सः ।

ततः सः परशोः धारां सकृत् परीक्ष्य उग्रदण्डम् उद्दिश्य - ''अये उग्रदण्ड ! भवान् आगमनोद्देशं स्मारितवान् यत् तदर्थम् अनेके धन्यवादाः । भवान् स्वकीयं मार्गम् अनुसरतु । अहं तु पार्श्वस्थायां गुहायां निलीय स्थितस्य दुर्मुखराजस्य शिरः कर्तयित्वा इतः निर्गमिष्यामि'' इति उक्त्वा गुहां प्रति गमनाय उद्युक्तः ।

तदा उग्रदण्डः द्वित्राणि पदानि अग्रे आगत्य अवदत् - ''अये वधकभल्लूक ! क्षणं तिष्ठतु । भवता किञ्चित्पूर्वं भल्लूकमान्त्रिकस्य नाम उच्चारितं खलु ? मया यस्य भल्लूकमान्त्रिकस्य नाम श्रुतं सः एव न स्यात् खलु भवता उक्तः अपि ? भवता उक्तस्य वयः किम् ?'' इति ।

एतत् श्रुत्वा उच्चैः हसित्वा वधकभल्लूकः अवदत् - ''कीदृशः प्रश्नः भवतः ? सूर्याचन्द्रमसोः यत् वयः स्यात् तदेव स्यात् भल्लूकमान्त्रिकस्यापि । तस्य नेत्रयोः पुरतः एव हिमालयस्य उत्पत्तिः जाता, एतावता प्रमाणेन प्रवृद्धा च । स्रोतोरूपेण उत्पन्नः ब्रह्मपुत्रनदः विशालरूपेण यदिदानीं प्रवहति तदपि तेन प्रत्यक्षं दृष्टम् । एतादृशस्य वयः कथं निर्देष्टुं शक्येत ?'' इति ।

''साधु, भल्लूकमान्त्रिक ! साधु ! भवतः

परशोः यावती तीक्ष्णता ततोऽपि अधिक-तीक्ष्णता भवतः जिह्वायाः । अहं भवतः विषये प्रसन्नः अस्मि । भवता सह आगत्य भल्लूकमान्त्रिकस्य दर्शनं प्राप्यते चेत् वरं स्यात्'' इति उक्त्वा उग्रदण्डः स्वस्य हस्ते स्थितां शिलागदां भूमौ क्षिप्तवान् ।

राक्षसस्य एतं व्यवहारं दृष्ट्वा आश्चर्यं प्राप्य वधकभल्लूकः अवदत् - ''शिलागदा किमर्थं क्षिप्ता भवता ? किं कोऽपि विशिष्टोद्देशः अस्ति एतस्य ?'' इति ।

''इतः आरभ्य आवां सुहृदौ । एतस्य द्योतनाय मया एवं कृतम्'' इति अवदत् उग्रदण्डः ।



एतत् श्रुत्वा वधकभल्लूकः सकृत् उच्चैः हसित्वा अवदत् - ''भल्लूकमान्त्रिकस्य गज-मुखयुक्तस्य मन्त्रदण्डस्य स्पर्शात् मया एतत् रूपं प्राप्तम् अस्ति । दुर्मुखस्य शिरसः कर्तनं यदा मया करिष्यते तदा मां पूर्वतनं वधकं करिष्यति सः । अतः आवयोः मैत्री सर्वथा असम्भवा । भवान् स्वगुहां गच्छतु नाम'' इति ।

एतदनन्तरं वधकभल्लूकः गुहामुखे स्थितां शिलाम् अपसारयितुं प्रयासम् आरब्धवान् । तदा गुहायाः अन्तः स्थितः अङ्गरक्षकः कम्पमानं नागमल्लम् अवदत् - ''नागमल्ल ! इदानीं महाराजस्य, अस्माकं सर्वेषां च मरणं निश्चितम् । किं करणीयम् इदानीम् ?'' इति ।

तदा नागमल्लः प्रश्नार्थकदृष्ट्या दुर्मुख-राजम् अपश्यत् । दुर्मुखः तु क्षीणस्वरेण किमपि वदन् गुहामुखम् एव पश्यन् आसीत् । नागमल्लः दुर्मुखम् अवदत् - ''अये, भवतः सेवकस्य वचनात् स्पष्टं जातम् अस्ति यत् भवान् दुर्जयगुप्तः न, अपि तु राजा एव इति । वधकभल्लूकः भवतः शिरसः कर्तनाय एव आगतः अस्ति । एवं स्थिते किम् एतेन क्षीणस्वरेण कथनेन ? आत्मरक्षणार्थं को वा उपायः चिन्त्यमानः अस्ति भवता ?'' इति ।

''तस्य ज्ञानार्थम् एव अहम् आराध्य-देवतायाः नाम्नः जपं कुर्वन् अस्मि'' इति अवदत् दुर्मुखः ।

''किम् अद्यावधि भवता आराध्यदेवस्य अनुज्ञां प्राप्य एव सर्वाणि कार्याणि कृतानि ? धिक् भवन्तम्'' इति दुर्मुखं निन्दित्वा नाग-मल्लः गुहायाः द्वारस्य समीपं गत्वा उच्चस्वरेण - ''अये वधकभल्लूक ! भवान् अत्र स्थितेषु दुर्जयगुप्तापरनामानं दुर्मुखराजम् एव खलु



संहर्तुम् इच्छति ?'' इति अपृच्छत् ।

''आम् ! अन्येषां पीडने मम तात्पर्यं सर्वथा नास्ति । तं गुहातः बहिः प्रेषयन्तु । तस्य शिरः कर्तयित्वा अहम् इतः मौनेन निर्गमिष्यामि'' इति अवदत् वधकभल्लूकः ।

एतत् वचनं श्रुतवतः दुर्मुखराजस्य मुखं विवर्णं जातम् । सः स्वस्य पार्श्वे स्थितम् अङ्गरक्षकम् अवदत् - ''अये अङ्गरक्षक ! स्वामिभक्तिप्रदर्शनपुरस्सरं स्वर्गं प्राप्तुम् अयम् अस्ति योग्यः अवसरः । भवान् अग्रे गत्वा वधकभल्लूकं सम्मुखीकरोतु । तदभ्यन्तरे अहम् आत्मरक्षणाय मार्गान्तरम् अस्ति किम् इति किञ्चित् चिन्तयिष्यामि'' इति ।

अत्रान्तरे वधकभल्लूकः क्रोधेन अगर्जत् - ''अये, सः दुष्टः दुर्मुखराजः क्व ? यदि अहं गुहां प्रविशेयं तर्हि तत्रत्यान् सर्वान् मारयेयं निर्दयम्'' इति ।

नागमल्लः नेत्रसङ्केतेन अनुचरौ किमपि सूचितवान् । अनुचरौ नागमल्लस्य पृष्ठतः गत्वा स्थितवन्तौ । तदा द्वारस्थां शिलां किञ्चित् अपसार्य मुखं बहिः प्रसार्य नागमल्लः अवदत् - ''महाशय ! मां मदनुचरौ च किमपि मा करोतु कृपया । वयं क्रूरपशूनां मध्ये प्राणान् कथञ्चित् धरन्तः अत्र वसामः'' इति ।

''भवन्तः लुण्ठाकाः इति अहं जानामि । तथापि भवतः अहं न पीडयामि । भवन्तः गुहातः बहिः आगन्तुम् अर्हन्ति'' इति अवदत् वधकभल्लूकः ।

एतदनन्तरं नागमल्लः तदनुचरौ च प्रयत्नेन गुहाद्वारस्थां शिलाम् अपनीतवन्तः, बहिः आगतवन्तः च । दुर्मुखराजः अपि तान् अनुसृत्य आगत्य कथञ्चित् बहिः गत्वा ततः पलायनाय उद्युक्तः ।

एतत् दृष्टवान् वधकभल्लूकः तम् अनुसरन् गत्वा - ''अये दुर्मुख ! तिष्ठतु, तिष्ठतु'' इति उच्चैः अवदत् । राजा शिलागदां गृहीत्वा तिष्ठन्तम् उग्रदण्डं दृष्ट्वा उच्चैः चीत्कुर्वन् तदीयचरणयोः अपतत् ।

वधकभल्लूकः महता सन्तोषेण - ''अये दुष्टदुर्मुख ! इदानीं भवान् मम हस्तगतः जातः अस्ति'' इति वदन् दुर्मुखसमीपम् आगतः ।

तावता उग्रदण्डः हस्तम् उन्नीय तं निवारयन् अवदत् - ''मित्र ! वधकभल्लूक ! गुरुः भल्लूकमान्त्रिकः भवन्तं सजीवस्य दुर्मुखस्य शिरसः आनयनं सूचितवान् उत मृतस्य ?'' इति ।

एतत् श्रुत्वा वधकभल्लूकः स्तब्धः सन् क्षणकालं मौनेन अतिष्ठत् । सः भूमौ निश्चलतया पतितं दुर्मुखम् एव निर्निमेषं पश्यन् अपृच्छत् - "उग्रदण्ड ! किम् एषः दुर्मुखः मृतः इति भवान् चिन्तयति ?" इति ।

"अयं न मृतः, अपि तु मूर्च्छितः । प्राज्ञाः उक्तवन्तः सन्ति यत् मूर्च्छां गतस्य शिरसः कर्तनं पापाय इति । अतः भवान् एतं भल्लूकमान्त्रिकसमीपम् एव नयतु । तत्रैव एतस्य शिरसः छेदः कर्तुं शक्यते । यावत् भवान् मान्त्रिकसमीपं गच्छति तावता एषः दुर्मुखराजः सचेतनः भविष्यति" इति अवदत् उग्रदण्डः ।



तदा वधकभल्लूकः दीर्घं निश्श्वस्य अवदत् - "किं मया शत्रोः शरीरं स्कन्धेन वोढव्यम् ? कीदृशः उपदेशः भवतः ?" इति ।

उग्रदण्डः गुहायाः दिशि अपश्यत् । तत्र नागमल्लः तदनुचरौ च ततः पलायनाय उद्युक्तौ दृष्टौ तेन । तस्मात् सः उच्चस्वरेण तान् अतर्जयत् - "अये, पान्थान् लुण्ठयन्तः लुण्ठाकाः ! किं भवन्तः पलायनं चिन्तयन्तः सन्ति ? एषोऽहं भवतः सर्वान् पादैः विमर्द्य यमलोकं प्रति प्रेषयिष्यामि । विना प्रतिवचनम् अत्र आगच्छन्तु । सः अङ्गरक्षकः क्व गतः ?" इति ।

एतत् श्रुत्वा लुण्ठाकाः भीत्या कम्पमानाः जाताः । नागमल्लः गुहायाः अन्तः दृष्टिं प्रसार्य अवदत् - "महाशय ! दुर्मुखस्य अङ्गरक्षकः मूर्च्छां गतः अस्ति इति भाति । सः गुहायां पतितः दृश्यते" इति ।

"सः मूर्च्छां गतः इव अभिनयति । तं वदतु यत् उग्रदण्डः क्षमादानं करोति इति" इति अवदत् उग्रदण्डः ।

तदा नागमल्लः उच्चस्वरेण अवदत् - "अये अङ्गरक्षक ! सचेतनः भवतु भवान् । महाराक्षसः उग्रदण्डः अभयदानेन भवन्तम् अनुगृहीतवान् अस्ति" इति ।

एतत् वचनं श्रुत्वा अङ्गरक्षकः झटिति उत्थितवान् । जानुभ्यां सरन् गुहातः बहिः आगत्य कम्पमानेन स्वरेण सः अपृच्छत् - "किं महाराजस्य दुर्मुखस्य शिरः कर्तितं जातम् ? वधकभल्लूकः किम् इतः निर्गतवान् ?" इति ।

तावता नागमल्लस्य अनुचरौ तस्य कण्ठं गृहीत्वा उन्नीय गुहातः बहिः आनीय उक्तवन्तौ - "किं केवलैः प्रश्नैः ? तत्र पश्यतु । भवतः राजा दुर्मुखः उग्रदण्डस्य पादयोः मूले मूर्च्छां

प्राप्य पतितः अस्ति'' इति ।

सः आपादमस्तकं कम्पमानः उग्रदण्डस्य समीपं गत्वा अवदत् - ''महाराज ! एतस्मात् क्षणात् अहं भवतः अङ्गरक्षकः अस्मि । कृपया वधकभल्लूकात् मां रक्षतु'' इति ।

तदा उग्रदण्डः विकटाट्टहासं कुर्वन् अवदत् - ''मम प्राणानां रक्षणाय कश्चन अङ्गरक्षकः प्राप्तः अस्ति । अहो, शक्तिशालिना अपि राक्षसेन मया कीदृशी दुर्गतिः प्राप्ता अस्ति !'' इति ।

ततः सः अङ्गरक्षकम् आदिशत् - ''अये रक्षक ! पार्श्वस्थां गुहां प्रविश्य शिलापात्रं किञ्चन स्वीकृत्य अनतिदूरे स्थितात् कासारात् जलम् आनयतु । एतदभ्यन्तरे दुर्मुखस्य सचेतनतासम्पादनाय अन्यः कोऽपि मार्गः अस्ति किम् इति अहं किञ्चित् चिन्तयिष्यामि'' इति ।

''अस्माकं राजा यदा सचेतनः भविष्यति तदा एषः वधकभल्लूकः किं तदीयं शिरः कर्तयित्वा नेष्यति ?'' इति अपृच्छत् अङ्गरक्षकः ।

तदा वधकभल्लूकः क्रोधेन - ''अये मूर्ख ! उग्रदण्डवर्येण यत् आदिष्टं तत् आदौ करोतु । ततः अन्ये प्रश्नाः'' इति अतर्जयत् ।

ततः अङ्गरक्षकः गुहां प्रविश्य शिलापात्रं किञ्चन स्वीकृत्य कासारं गत्वा यावत् जलपूरणम् आरब्धवान् तावता वृक्षसमूहस्य मध्यात् निर्गतः व्रणितशुण्डः गजः उच्चैः घीङ्कारम् अकरोत् अङ्गरक्षकदिशि आगच्छत् च ।

गजस्य आगमनं दूरात् एव दृष्ट्वा सः अङ्गरक्षकः शिलापात्रं कासारतीरे एव परित्यज्य उग्रदण्डसमीपं धावन् आगत्य अवदत् - ''महाशय ! वधकभल्लूकीयः व्रणितशुण्डः गजः माम् अनुसरन् इतः एव आगच्छति । सः मां मारयिष्यति ! कृपया भवान् मां रक्षतु'' इति ।

''अहो, मम वाहनं गजः किम् एतस्मिन् एव प्रदेशे अस्ति ?'' इति साश्चर्यं वदन् वधकभल्लूकः गजम् अपश्यत् ।

सः गजः तु शुण्डाम् उन्नीय उच्चैः घीङ्कुर्वन् महाबली पिशाचः इव आक्रमणाय उद्युक्तः जातः ।

(अनुवर्तते)



# वेताल-कथा

# महिमान्वितानि बीजानि

त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''अये राजन् ! भवान् यत् घोरं परिश्रमं करोति तस्य उद्देशः कः इति तु मया अद्यावधि न ज्ञातम् । भवतः जन्मपत्रिकायाम् एव एवं लिखितं स्यात् इति अहं भावयामि । किं परोपकाराय भवान् एतादृशं प्रयासं करोति ? भोः स्मरतु, परोपकारः कदाचित् जीवनम् एव नाशयति । पूर्वं परमेशः नाम कश्चन परोपकारी एतां परोपकार-प्रवृत्तिम् अवलम्बमानः स्वस्य, पुत्रस्य च जीवनं



नाशितवान् आसीत् । भवति विवेकस्य जागरणाय अहं तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

जगन्नाथपुरनिवासी परमेशः परोपकारी । परोपकारार्थम् एव तेन आभरण-भूम्यादयः अपि विक्रेतव्याः अभवन् । ऋणम् अपि कृतं तेन । मरणात् पूर्वं सः पुत्रम् अञ्जनकुमारम् अवदत् – ''मया भवद्विषये अन्याय्यम् आचरितम् । इदानीं महत् ऋणम् अस्ति अस्माकम् । तथापि भवता धैर्यच्युतिः न प्राप्तव्या । परोपकारः न परित्यक्तव्यः । यदि किङ्कर्तव्यतामूढता प्राप्येत तर्हि भवान् अर्चकं रामशर्माणं दृष्ट्वा सः यथा वदति तथा आचरतु । सः एव मां परोपकारवृत्तौ योजितवान्'' इति ।

परमेशस्य मरणस्य अनन्तरम् ऋणदातारः गृहे स्थितानि सर्वाणि वस्तूनि नीतवन्तः । तथापि सहस्ररूप्यकात्मकम् ऋणं प्रत्यर्पणीयम् आसीत् परमेशेन ।

तदा वराहमूर्तिः नाम धनिकः अवदत् – ''परमेशः श्रेष्ठः जनः आसीत् । भवता तु सहस्रं रूप्यकाणि प्रत्यर्पणीयानि सन्ति खलु ? तत् ऋणम् इदानीम् अहं प्रत्यर्पयिष्यामि । भवता कालान्तरे तत् मह्यं दातव्यम् । तावत् भवतः माता सत्यवती मम गृहे सेविकात्वेन तिष्ठेत्'' इति ।

एतत् श्रुत्वा अञ्जनकुमारः निश्चेष्टः जातः । तदा एव तेन पितुः वचनं स्मृतम् । सः रामशर्मणः गृहं प्रति प्रस्थितः ।

रामशर्मा अञ्जनकुमारं सहर्षं स्वागतीकृत्य – ''भवतः पिता आजीवनं परोपकारं कृतवान् । तेन कृतस्य परोपकारस्य पुण्यम् एव भवन्तं रक्षिष्यति'' इति अवदत् ।

''महाशय ! परोपकारेण मम पित्रा को वा लाभः प्राप्तः ? मया वा कः लाभः प्राप्येत ?'' इति अपृच्छत् अञ्जनकुमारः ।

तदा रामशर्मा अवदत् – ''कुमार ! भवान् पितुः विषये अधिकं न जानाति इति भाति । बाल्ये एव सः केनचित् घोरेण व्याधिना ग्रस्तः आसीत् । सः रोगः दिने दिने तं शक्तिहीनं करोति स्म । प्रतिदिनं समग्रे शरीरे कण्टकपीडाम् अनुभवति स्म इव सः । एतादृशेन रोगेण ग्रस्ताः एवं महतीं पीडाम् अनुभूय पञ्चदशवर्षाभ्यन्तरे मरणं प्राप्नुवन्ति । किन्तु भवतः पिता परोप-

कारकारणतः तस्मात् व्याधितः आत्मानं रक्षितुं समर्थः जातः । यदि भवतः पिता भवन्निमित्तं सम्पत्तिं रक्षन् तेन व्याधिना पीडाम् अनुभवन् स्थितः स्यात् तर्हि किं भवता सन्तोषः प्राप्तः अभविष्यत् ? मम वचने भवतः विश्वासः न भवेत् कदाचित् । अतः भवान् अस्माकं ग्रामस्य वैद्यं रघुनाथं दृष्ट्वा ततः सर्वं विवरणं प्राप्नोतु'' इति ।

ततः अञ्जनकुमारः वैद्यस्य रघुनाथस्य गृहं गत्वा स्वस्य आगमनस्य कारणम् अवदत् । तदा वैद्यः रघुनाथः अवदत् - ''भवतः पित्रा यः रोगः प्राप्तः आसीत् तस्य निमित्तम् औषधम् एव नास्ति वैद्य-शास्त्रे । अहं भवतः पितरम् एतम् अंशम् उक्तवान् आसम् अपि । अनन्तरं सः रामशर्मणा अमिलत् । रामशर्मणा, न जाने किम् इन्द्रजालं कृतम् इति, भवतः पिता दीर्घकालं यावत् स्वस्थः सन् एव वर्षाणि यापितवान् । भवतः पित्रा अनायासमरणं यत् प्राप्तं तादृशम् अङ्गुलिगणनीयैः भाग्यवद्भिः एव प्राप्यते'' इति ।

एतस्य श्रवणात् रामशर्मणः वचने अञ्जनकुमारस्य किञ्चिदिव विश्वासः उत्पन्नः । सः रामशर्मणः गृहं गत्वा अवदत् - ''भवतः वचनं सत्यम् । इदानीं मया किं करणीयम् इति वदतु'' इति ।

तदा रामशर्मा एकं वस्त्रग्रन्थिम् अञ्जन-शर्मणे दत्त्वा अवदत् - ''एतस्य अन्तः कानिचन बीजानि सन्ति । भूमौ स्थापनस्य अनन्तरं दिनाभ्यन्तरे एतानि सस्यरूपं प्राप्नुवन्ति । सप्ताहाभ्यन्तरे महावृक्षत्वं



यान्ति । एते वृक्षाः मनुष्येभ्यः छायां पक्षिभ्यः आश्रयं च यच्छन्ति । यत्र आरोपणात् अन्येषाम् उपकारः भवेत् तादृशे स्थले आरोपयतु एतानि । कुत्र आरोपणीयम् इति भवान् एव निर्णयतु । परोपकारात् भवतः हितं सेत्स्यति'' इति ।

कुमारः तं वस्त्रग्रन्थिं स्वीकृत्य ततः प्रस्थितवान् । मार्गे तेन लक्षितं यत् मार्गम् उभयतः वृक्षाः एव न सन्ति इति । अतः सः मार्गपार्श्वे एकं गर्तं निर्मितवान् । तस्मिन् गर्ते एकं सुवर्णपदकं तेन प्राप्तम् । पदकस्य एकस्मिन् पार्श्वे लक्ष्मीचित्रम् अपरत्र विष्णु-चित्रं च आसीत् । 'मया आरब्धस्य परोपकारस्य प्रतिफलम् एतत्' इति स्वगतम् उक्त्वा एकं बीजं तत्र आरोप्य अग्रे





प्रस्थितवान् सः । कश्चन ग्रामः प्राप्तः तेन । कस्यचित् गृहस्य पुरतः अतिष्ठत् सः ।

तस्य गृहस्य स्वामी राकेशः द्वारम् उद्घाट्य बहिः आगत्य अञ्जनकुमारं सन्देहेन सकृत् अपश्यत् । ''एषु दिनेषु अस्माकं ग्रामे चौर्यं प्रवृद्धम् अस्ति'' इति वदन् अञ्जनकुमारं गृहीत्वा तस्य वस्त्रेषु शोधनम् अकरोत् । तत्र तेन बीजानां ग्रन्थिः, सुवर्णपदकं च प्राप्ते ।

तत् सुवर्णपदकं परीक्षापूर्वकं दृष्ट्वा - ''एतत् तु अस्माकं ग्रामस्य देवालयस्य पवित्रं पदकम् । षड्भ्यः मासेभ्यः पूर्वम् एतत् अदृश्यतां गतम् आसीत् । अद्य तस्य चोरः भवान् लब्धः'' इति वदन् तं गृहस्य अन्तः बलात् नीतवान् ।

गृहजनाः पदकम् अभिज्ञाय अञ्जनकुमारं चोरं मत्वा निन्दनम् आरब्धवन्तः । तदा अञ्जनकुमारः महता खेदेन अवदत् - ''महोदयाः ! मम पिता परमेशः परोपकारम् एव जीवनव्रतं भावितवान् आसीत् । परोपकारार्थं तेन अनेकानि कष्टानि सोढानि । तस्य मरणस्य अनन्तरं मया तदीयः एव परोपकारमार्गः अनुसृतः । पथिकानां विश्रामदायकस्य वृक्षस्य निमित्तम् अहं यदा बीजम् आरोपयन् आसं तदा मया गर्ते एतत् सुवर्णपदकं प्राप्तम् । यदि एतत् भवतां तर्हि कामं स्वीकुर्वन्तु भवन्तः । किन्तु मां चोरं मा वदन्तु । तेन मम पितुः आत्मनः खेदः भवेत्'' इति ।

परोपकारशीलस्य परमेशस्य विषयं तस्मिन् ग्रामे सर्वे जानन्ति स्म एव । अञ्जनकुमारः परमेशस्य पुत्रः इति यदा ज्ञातं तदा सर्वे पश्चात्तापम् अनुभूतवन्तः । अञ्जन-कुमारस्य मुखात् सर्वं वृत्तान्तं श्रुत्वा राकेशः - ''भवान् तु पितुः अनुगुणः योग्यः पुत्रः । भवतः अत्र आगमनम् अस्माकं सौभाग्याय एव । आवाम् अस्माकं ग्रामस्य भूस्वामिनः समीपं गच्छाव तावत्'' इति अवदत् । ततः तौ भूस्वामिनः गृहं प्रति प्रस्थितवन्तौ ।

मार्गे राकेशः भूस्वामिनः कथां श्रावयन् अवदत् - ''षोडशवर्षीया भू-स्वामिनः पुत्री राधिका विलक्षणेन रोगेण पीडिता अस्ति । दिने दिने तस्याः कार्श्यं वर्धमानम् अस्ति । न खादितं जीर्णं भवति, न पीतम् उदरे तिष्ठति । समग्रे शरीरे महतीं वेदनाम् अनुभवति सा । वैद्याः उक्तवन्तः

सन्ति यत् वैद्यशास्त्रे एतस्य कापि चिकित्सा नास्ति इति । कश्चन वैद्यः उक्तवान् अस्ति यत् एतेन रोगेण ग्रस्ताः पुरुषाः पञ्चदश वर्षाणि जीवन्ति, महिलाः च वर्षद्वयमात्रम् एव इति । इतः मासानन्तरं राधिकायाः जीवनस्य तत् वर्षद्वयम् अतीतं भविष्यति । कश्चन वैद्यः उक्तवान् आसीत् यत् बीजारोपणानन्तरं सस्यत्वं, सप्ताहाभ्यन्तरे वृक्षत्वं च प्राप्तवन्तः शतं वृक्षाः यस्मिन् उद्याने स्युः, तादृशे उद्याने यदि राधिका दिनं यावत् वासं करिष्यति तर्हि तत्रत्यस्य वायोः सम्पर्कतः सा यथापूर्वं स्वस्था भविष्यति इति । भवतः समीपे तादृशानि महिम-युक्तानि बीजानि सन्ति । अतः भवान् भूस्वामिनः साहाय्यं कर्तुम् अर्हति'' इति ।



भूस्वामी अञ्जनकुमारस्य विषयं श्रुत्वा झटिति एव उद्यानाय स्थलं सूचितवान् । अञ्जनकुमारेण तत्र बीजावापः आरब्धः । सर्वाणि बीजानि आरोपितानि । शतसंख्या-पूर्त्यै एकस्य बीजस्य न्यूनता दृष्टा ।

भूस्वामिनं वैद्यः अवदत् यत् उद्याने शतं वृक्षाः सन्ति चेदेव फलं प्रप्यते, न अन्यथा इति । अत्रान्तरे तत्र आगतः कश्चन मन्त्र-तन्त्रज्ञः अवदत् - ''राधिकायाः रोगस्य अपनयनाय अपरोऽपि मार्गः अस्ति । अहं मम मन्त्रशक्तेः साहाय्येन तस्याः व्याधिम् अन्यस्मिन् सङ्क्रामयितुं शक्नोमि । यः इच्छापूर्वकम् एतदर्थं सिद्धः तस्मिन् एव अहं व्याधिं सङ्क्रामयितुं शक्नोमि'' इति ।

भूस्वामी तत्पत्नी च एतदर्थं सिद्धौ जातौ । मन्त्रज्ञः तयोः परीक्षां कृत्वा उक्तवान् - ''कृपया स्पष्टवचनार्थम् अहं क्षन्तव्यः । मातापितरौ सन्तौ अपि भवन्तौ पुत्र्याः रोगस्य स्वीकारार्थम् अनर्हौ'' इति ।

तदा अञ्जनकुमारः अग्रे आगत्य अवदत् यत् अहं राधिकायाः व्याधिं स्वीकर्तुं सहर्षं सिद्धः अस्मि इति । मन्त्रज्ञः तं परीक्ष्य तस्य स्वेच्छापूर्वकप्रवृत्तिं ज्ञात्वा मन्त्रोच्चारणेन राधिकायाः रोगम् तस्मिन् सङ्क्रामितवान् । तस्मात् राधिका उत्साहेन उदतिष्ठत्, अञ्जन-कुमारश्च वेदनाम् अनुभवन् भूमौ अपतत् ।

अत्रान्तरे रामशर्मा तत्र आगतः । प्रवृत्तं सर्वं श्रुत्वा सः अवदत् - ''मम समीपे अपि अन्यत् एकम् अपि बीजं नास्ति । एषः अञ्जनकुमारः परोपकारेण पितरम् अपि अतिशेते । अतः भगवान् एव एतं

रक्षिष्यति'' इति ।

अञ्जनकुमारेण आरोपितानि बीजानि दिनाभ्यन्तरे सस्यरूपं गतानि । ततः सप्ताहाभ्यन्तरे तत्र महावृक्षाः दृष्टाः । ततः दिनं यावत् अञ्जनकुमारः तस्मिन् उद्याने विहारम् अकरोत् । तत्रत्यस्य वायोः स्पर्शतः सः पूर्णरूपेण स्वस्थः जातः ।

स्वस्य पुत्र्याः इच्छायाः अनुगुणं भूस्वामी अञ्जनकुमाराय तां दत्त्वा विवाहं निर्वर्तितवान् । विवाहानन्तरं सः अवदत् - ''अहो, परोपकारित्वं प्राप्तव्यं चेदपि कियन्ति कष्टानि अनुभोक्तव्यानि !'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''अये राजन् ! परमेशस्य परोपकरशीलता हिताय अहिताय चापि जाता इति भाति । अञ्जनकुमारेण एव कियन्ति कष्टानि नानुभूतानि ? मन्त्रज्ञः किमर्थं राधिकायाः मातापितरौ व्याधेः स्वीकरणे अनर्हौ उक्तवान् ? किम् एतत् आश्चर्यं न जनयति ? उद्याने शतं बीजानि तु न आरोपितानि आसन् । तथापि तानि कथं फलदायकानि जातानि ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''कीर्तिकामनया धनकामनया वा कृतः उपकारः परोपकारः इति न उच्यते । यः परोपकारी भवति तेन कष्टानि सोढव्यानि भवन्ति इति तु सत्यम् । अञ्जनकुमारः एव अत्र उदाहरणम् । किन्तु एतानि कष्टानि न शाश्वतानि । राधिकायाः मातापितरौ कर्तव्यबुद्ध्या तस्याः व्याधिं स्वीकर्तुम् अग्रे आगतौ, न तु परोपकारबुद्ध्या । अतः एव तौ व्याधिस्वीकरणाय अनर्हौ अवदत् मन्त्रज्ञः । 'व्याधिः भूस्वामिपरिवारे एव एकस्मात् अन्यत्र यदि गच्छेत् तर्हि पारितोषिकं न प्राप्येत' इति चिन्तितम् अपि स्यात् तेन । यद्यपि एकं बीजं न्यूनम् आसीत्, तथापि नवनवतिबीजानां माहात्म्यं तु न अपगतम् आसीत् । अतः एव अञ्जनकुमारस्य व्याधिः अपगतः'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवस्थः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।






## भारवाहिन्यः रेल्वेस्थानके !

गुजरातस्य भावनगरस्य शासकः स्वस्य प्रासादे आधिक्येन महिलाः एव उद्योगे नियोजितवान् आसीत् । तस्य राज्ये यदा रेल्वेव्यवस्था आरब्धा, भावनगरे च यदा स्थानकं स्थापितं तदा महिलाः एव भारवाहिकात्वेन नियुक्ताः । सा एव परम्परा अद्यापि अनुवर्तते । यत्र महिला एव भारवाहिन्यः सन्ति तादृशम् अद्वितीयं स्थानकम् एतत् अद्यापि भारते देशे ।



## वृक्षकोटरे कूर्माणाम् आवासः

अस्माकं देशस्य ईशान्यदिशि स्थिते मिझोराम्राज्ये क्रैस्तजनाः एव अधिकाः । तत्र प्रायः शतात् वर्षेभ्यः पूर्वं क्रैस्तमतेन पदं स्थापितम् । तत्रत्याः तत् शततमं वर्षं सवैभवम् आचरितुम् इष्टवन्तः । तदर्थं तैः महाकारकस्य आनकस्य ध्वन्यनुगुणं नृत्यं कृतम् । तस्य आनकस्य निर्माणाय ते राज्ये एव स्थितं महावृक्षम् एव कर्तितवन्तः ।

यदा सः वृक्षः कर्तितः तदा तस्य अन्तर्भागः रिक्तः दृष्टः । तत्र वसन्ति स्म दश कूर्माः ! प्रायः आ बहोः कालतः ते तत्र वसन्ति स्म ।



# काश्मीरीया जानपदकथा

## तरङ्गाणां गणकः

बहोः कालात् पूर्वं श्रीनगरे नित्यानन्दः नाम धनिकः तरुणः निवसति स्म । परम्परया प्राप्ता प्रभूता सम्पत्तिः भूमिः च आसीत् तस्य । कृषिकार्यं कृषिकेभ्यः अर्पयित्वा प्रतिवर्षं धनं प्राप्नोति स्म सः । अतः जीवननिर्वहणाय परिश्रमः करणीयः न आसीत् तेन । वैभवोपेतं जीवनं यापयन् सः सुखेन जीवति स्म ।

नित्यानन्दस्य प्रतिवेशी सोमनाथः । सः बुद्धिमान् उन्नतविद्यां प्राप्तवान् च आसीत् । अतः राज्यस्य गणनाधिकारिस्थानं प्राप्तम् आसीत् तेन । तस्मात् जनाः तं तस्य पत्नीं च महता आदरेण पश्यन्ति स्म । प्रतिवेशी सोमनाथः उन्नते स्थाने अस्ति चेदपि नित्यानन्दस्य तु कापि चिन्ता न आसीत् । किन्तु दिनानि सर्वदा समानानि न भवन्ति खलु ? कदाचित् एतस्मिन् विषये चिन्तनीयम् आपतितं तेन । सा घटना इत्थं प्रवृत्ता –



कदाचित् नित्यानन्दसोमनाथयोः पुत्रौ क्रीडमग्नौ आस्ताम् । केनचित् कारणेन तयोः मध्ये कलहः उत्पन्नः । तयोः कलहं श्रुत्वा मातरौ तत्र आगते । तस्मात् बालयोः कलहः उग्रः जातः, मात्रोः सङ्क्रान्तः च । नित्यानन्दस्य पत्नी राधा, सोमनाथस्य पत्नी कान्ता च स्वपुत्रस्य निरपराधतां समर्थयन्त्यौ प्रतिवेशिन्याः पत्युः निन्दने उद्युक्ते जाते ।

''भवत्याः पत्युः धनमदः । उद्योगः तु कोऽपि नास्ति । आलस्येन दिनानि यापयन् कालं व्यर्थीकरोति सः । मम पतिः तु देशस्य कोषाधिकारी अस्ति । मम पुत्रः निन्द्यते खलु भवत्या ? एतस्य परिणामः कः भवेत् इति अचिरात् एव द्रक्ष्यते भवत्या'' इति उक्त्वा कान्ता स्वस्य पुत्रस्य हस्तं गृहीत्वा आकृष्य गृहं प्रतिगत्य द्वारं सशब्दं पिहितवती ।

ततः अल्पे एव काले राधया, तस्याः पत्या नित्यानन्देन च अवगतं यत् सोमनाथः तत्पत्नी च वृथापीडनम् आरब्धवन्तौ स्तः इति । योग्यः करः न दत्तः इति शासनस्य अधिकारिभिः पीडनम् आरब्धम् । तदनन्तरं बहुवारम् सर्वकारीयकार्यालयान् प्रति

अटित्वा एतं व्यवहारं समापितवान् नित्यानन्दः ।

एतस्याः घटनायाः अनन्तरं कदाचित् राधा पतिं नित्यानन्दम् उक्तवती - ''भवतः कोऽपि शासकीयोद्योगः नास्तीत्यतः खलु सोमनाथपत्नी भवन्तम् 'अलसशिखामणिः' इति निर्देष्टुं धैर्यं कृतवती ? अतः भवान् कमपि सर्वकारीयोद्योगं प्राप्नोतु । तदा अस्माभिः अपि तौ पीडयितुं शक्यौ'' इति ।

एतत् वचनं युक्तम् अमन्यत नित्यानन्दः अपि । 'उद्योगः कोऽपि प्राप्तव्यः एव' इति सङ्कल्पितवान् सः ।

स्थानीयः अधिकारी कोऽपि उद्योगं दातुं न अर्हति इति नित्यानन्दः जानाति स्म । 'राज्ञा नियुक्तस्य राजप्रतिनिधेः तु उद्योग-दानाधिकारः भवति' इति स्मरन् सः साक्षात् राजप्रतिनिधिसमीपं गत्वा योग्यम् उद्योगं प्रार्थितवान् । राजप्रतिनिधिः अवदत् यत् इदानीम् उद्योगावकाशः कोऽपि नास्ति इति ।

तदा नित्यानन्दः अवदत् - ''श्रीमन् ! एषा उद्योगप्रार्थना न धनप्राप्त्युद्देशेन, अपि तु गौरवसम्पादनहेतुना । वेतनरहितः उद्योगः अपि ससन्तोषं स्वीक्रियते मया । अतः यः कोऽपि उद्योगः दीयताम् । मम निराशता मा कल्प्यताम्'' इति ।

'विलक्षणा प्रार्थना एषा । अनुभवः, विद्यार्हता वा एतस्य नास्ति । तथापि एषः उत्तमम् एव उद्योगम् इच्छति' इति चिन्तयित्वा राजप्रतिनिधिः औदासीन्येन अवदत् - ''उद्योगावकाशः तु कोऽपि नास्ति । नूतनस्य अवकाशस्य सृष्टिः अपि दुश्शका । प्रयोजनविशेषस्य प्राप्तिं मनसि अनिधाय नदीतरङ्गगणनादिकार्यं किमपि भवते दातव्यं



भवेत्'' इति ।

''नदीतरङ्गगणनोद्योगः एव भवतु नाम । दीयतां सः'' इति अवदत् नित्यानन्दः ।

'एतस्य दानेन यदि कोऽपि तुष्येत् तर्हि तदपि भवतु नाम' इति विचिन्त्य 'तरङ्गगणनोद्योगे एषः नियुक्तः अस्ति' इति नियुक्तिपत्रं दत्तवान् राजप्रतिनिधिः ।

राजमुद्राङ्कितं तत् नियुक्तिपत्रं स्वीकृत्य गतः नित्यानन्दः एकं महागणनालेखनपुस्तकं क्रीत्वा काञ्चित् नौकाम् आरूढवान् । नद्यां ये सञ्चरन्ति तैः कञ्चित् प्रमुखं सेतुम् अतिक्रम्यैव गन्तव्यम् आसीत् । सः तस्य सेतोः समीपं स्वनौकां नीत्वा तरङ्गाणां गणनाम् आरब्धवान् ।

एषा वार्ता अल्पे एव काले सर्वत्र प्रसृता । समग्रे श्रीनगरपरिसरे एषः नूतनः तरङ्गगणकः एव वार्ताविषयः जातः । एतस्य नियुक्तेः आवश्यकताविषये जनाः चर्चां कृतवन्तः ।

राजप्रतिनिधिना एव नियुक्तिः कृता आसीत् इत्यतः जनाः तम् आदरेणैव पश्यन्ति स्म । सहजतया तस्य पत्न्याः राधायाः विषये अपि जनानाम् आदरः अधिकः जातः ।

कानिचन दिनानि अतीतानि । कदाचित् नित्यानन्दः सेतुसमीपे सञ्चारं कुर्वतः नौकाचालकान् आज्ञापितवान् - "भवतां सञ्चारतः तरङ्गाणां गणनायां विघ्नः भवति । भवद्भिः तरङ्गाः नौकाचालनेन न कम्पनीयाः" इति । राज्ञा नियुक्तस्य आज्ञां कथं वा धिक्कर्तुम् अर्हन्ति ते ? अतः नित्यानन्दस्य अनुज्ञां प्रतीक्षमाणैः तैः घण्टां घण्टाद्वयं वा यावत् नौका स्थगनीया भवति स्म ।

अनूह्यः एषः विघ्नः कथं निवारणीयः इति चिन्तनं कृतवन्तः ते । 'शासनस्य अधिकारी सुमुखः अस्ति चेत् कोऽपि विघ्नः न बाधिष्यते' इति ते जानन्ति स्म । तस्मात् नित्यानन्दस्य सुमुखतासम्पादनाय तेषु एकैकः अपि धनं दत्तवान् । एतेन कारणेन निर्वेतनः अपि नित्यानन्दः प्रतिदिनं प्रभूतं धनं सम्पादयितुं समर्थः जातः ।

अथ कदाचित् तरङ्गाणां गणानायां मग्नः नित्यानन्दः *'शिकरा'* नामिकायां नौकायां सकुटुम्बम् उपविश्य आगच्छन्तं सोमनाथं दृष्टवान् । सोमनाथस्य कुटुम्बस्य जनाः उत्तमानि वस्त्राणि धृत्वा बन्धोः विवाहाय प्रस्थिताः आसन् ।

यदा सोमनाथस्य नौका समीपम् आगता तदा नित्यानन्दः आज्ञापयत् - "स्थग्यतां नौका" इति ।

"किमर्थम् ?" इति आश्चर्येण अपृच्छत् सोमनाथः ।

"भवतः नौका तरङ्गाणां सञ्चारे विघ्नम् उत्पादयति । तस्मात् अहं तरङ्गान् सम्यक् गणयितुं न शक्नोमि । अतः भवतः नौका सञ्चारं स्थगयेत्" इति उक्त्वा नित्यानन्दः तरङ्गाणां गणनायाम् उद्युक्तः जातः । अनन्यगतिकतया सोमनाथेन नित्यानन्दस्य अनुज्ञायाः प्रतीक्षां कुर्वता मौनेन स्थितम् । नित्यानन्दः तु तरङ्गाणां गणने, पुस्तके लेखने, पुनर्गणने, लेखने च निरतः जातः ।

समयः गतः । घण्टाः अतीताः । तथापि नित्यानन्दस्य कार्यं तु न समाप्तम् एव । विवाहमुहूर्तः अतीतः चेदपि सोमनाथः अग्रे गन्तुं समर्थः न जातः । राज्ञा नियुक्तस्य जनस्य आज्ञां तिरस्कर्तुं धैर्यं न आसीत् तस्य ।

अन्ते सोमनाथः प्रार्थितवान् - "भोः, भवते प्रभूतं धनं दास्यामि । कृपया अग्रे गमनाय अनुज्ञा दीयताम्" इति । तस्मात् प्रभूतं धनं स्वीकृत्य भावगर्भितहासं प्रदर्शयन् नित्यानन्दः अग्रे गमनाय अनुमतिं दत्तवान् ।

तस्मात् एव दिनात् कान्ता, सोमनाथश्च प्रतिवेशिनः नित्यानन्दस्य विषये आदरभावस्य प्रदर्शनम् आरब्धवन्तौ । ततः तयोः कुटुम्बयोः मैत्री प्रवृद्धा ।





# कोमलहृदयः

प्रशान्तपुरस्य राजा जयशीलः सुचारुतया राज्यं परिपालयन् आसीत् । कदाचित् तस्य देशे पूर्वभागे वृष्टेः अभावतः क्षामः उत्पन्नः । तत्प्रदेशीयाः जनाः कष्टेन दिनानि यापयन्ति स्म । बहवः जनप्रतिनिधयः आगत्य राजानं तत्रत्यां स्थितिं न्यवेदयन् । राजा धनधान्यादीनि तत्रत्येभ्यः दत्तवान् । तथापि जनाः तु क्षामस्थितेः वार्तां पुनः पुनः प्रेषयन्तः आसन् ।

''अतिवृष्टिक्षाममहारोगादीनां कारणतः आगतानि कष्टानि जनैः तदा तदा सोढव्यानि भवन्ति एव । प्राकृतिक विकोपाः एते । एतादृश्यः समस्याः धैर्येण सम्मुखीकरणीयाः । राज्ञः साहाय्यं समग्रतया एतादृशं कष्टं दूरीकर्तुं न शक्नुयात् एव'' इति वदन् राजा कदाचित् स्वस्य असहायकतां समर्थितवान् ।

तदा महामन्त्री अवदत् - ''यत्र समस्या भवति तत्रैव परिहारमार्गः अपि कश्चन भवति । अतः भवान् तत्र गत्वा प्रत्यक्षं स
पश्यति चेत् वरम्'' इति ।

राजा एतत् अङ्गीकृतवान् । 'यदि अ
राजवेषेणैव तत्र गच्छेयं तर्हि तत्रत्या
प्रतिष्ठिताः जनाः मां परितः स्थास्यन्ति
तदा सामान्यानां दुर्दशा मया न ज्ञायते
अतः वेषान्तरं धृत्वा गमनं वरम्' इ
विचिन्त्य राजा छद्मवेषं धृत्वा गत्वा क्षाम
ग्रस्तप्रदेशेषु अटनम् आरब्धवान्

वस्तुतः तत्र क्षामसमस्या उग्रा आसीत्
दिने एकं भोजनम् अपि न प्राप्यते
बहुभिः । देशे कदाचित् कुत्रचित् एतादृ
स्थितिः भवति स्म एव इत्यतः अत्र विशे
कोऽपि न लक्षितः राज्ञा ।

आत्मना मिलितान् सः वदति स्म
''अहम् अन्यदेशीयः । अस्माकं देशे अ
जनैः कदाचित् एतादृशी कष्टस्थि
सम्मुखीकरणीया भवति । किन्तु ते
हाहाकारं न कुर्वन्ति । ते सम्भूय क

अनामिका



ुर्वन्तः, सम्यक् परिश्राम्यन्तः च कष्ट-
स्थितिं निवारयन्ति । अत्र दर्शनात् भासते
त् तादृशः कोऽपि यत्नः अत्र क्रियमाणः
ास्ति इति'' इति ।

एतत् श्रुत्वा खिन्नः कश्चित् अवदत् -
'भवान् अन्यदेशीयः । अतः एव अस्माकं
ष्टं सम्यक् न अवगम्यते भवता ।
स्माकं विषये भवतः हृदये दायासहानु-
ुत्यादयः लेशमात्रेणापि न सन्ति'' इति ।

''यत् अस्ति तदेव उक्तं मया । यदि
ाजा स्वयम् अत्र आगच्छेत् तर्हि सोऽपि
तदेव वदेत् इत्यत्र नास्ति सन्देहः'' इति
वदत् जयशीलः ।

तदा पार्श्वस्थः कश्चन अवदत् - ''भवता
था उक्तं तथैव महाराजः अपि वदेत् इति
तु सत्यम् एव । ये कष्टम् अनुभवन्ति ते एव
अन्येषां कष्टम् अवगन्तुं शक्नुवन्ति ।
गुणनिधिसदृशाः दयाहृदयाः एव अस्माकं
कष्टम् अवगन्तुम् अर्हन्ति । सुखजीविनः
भवन्तः कथं वा अस्मत्कष्टम् अव-
गच्छेयुः ?'' इति ।

अयं गुणनिधिः कः इति जयशीलस्य
मनसि जिज्ञासा उत्पन्ना । विचारणतः ज्ञातं -
'गुणनिधिः दक्षिणदेशीयः । यः कष्टस्थितौ
भवति तम् अन्विष्य गच्छति सः । कष्टस्य
दर्शनात् तदीयं हृदयं द्रवति । तस्मात्
तन्मुखात् कविता निर्गच्छति । तादृशीनां
कवितानां श्रवणतः शिलाः अपि अश्रूणि
स्रावयन्ति । एषु दिनेषु गुणनिधिः पूर्वप्रदेशे
एव सञ्चरन् अस्ति' इति ।

दिनद्वयानन्तरं राजा गुणनिधिना मिलित-
वान् । प्रजानां कष्टस्य वर्णनं कुर्वता तेन
गीतानां कवितानां श्रवणतः राज्ञः हृदयम्
अपि कम्पितं जातम् । सः दयार्द्रः जातः ।
तस्य नेत्राभ्याम् अपि अश्रूणि निर्गतानि ।

इदानीं सः अवगतवान् यत् कष्टं नाम
कीदृशं भवति, तस्मात् प्रजाः कथं दुःख-
ग्रस्ताः सन्ति इति । किञ्चित् चिन्तनस्य
अनन्तरं तस्य मनसि विचारः आगतः यत्
गुणनिधिः यदि कस्मिंश्चित् प्रदेशे राज-
प्रतिनिधिः भवेत् तर्हि राज्यस्य हितं सिध्येत्
इति ।

राजधानीं प्रत्यागतः राजा स्वस्य विचारं
मन्त्रिणं श्रावितवान् । सर्वं श्रुत्वा मन्त्री
अवदत् - ''यः राजप्रतिनिधिः करणीयः
तस्य योग्यता आदौ परीक्षणीया इति मम

तस्य योग्यता आदौ परीक्षणीया इति मम नम्रं निवेदनम् । उत्तमः कविः उत्तमः राजप्रतिनिधिः अपि भवेत् एव इति न नियमः । अतः परीक्षणानन्तरम् एव निर्णयः करणीयः'' इति ।

''गुणनिधिः मया प्रत्यक्षं दृष्टः एव । अतः अहं तस्य योग्यताविषये सन्तुष्टः अस्मि । भवतः तृप्त्यर्थम् अन्यप्रकारेणापि तस्य परीक्षा भवतु । न तत्र विप्रतिपत्तिः मम । सा परीक्षा भवता एव करणीया'' इति अवदत् राजा ।

महामन्त्री एतत् अङ्गीकृतवान् । ततः गुणनिधये निमन्त्रणं प्रेषितम् । गुणनिधिः राजधानीम् आगतवान् । तस्य वासाय मन्त्री उत्तमां व्यवस्थां कारितवान् । यथोचितं सत्कारः अपि प्रवृत्तः । एकस्य दिनस्य अनन्तरं महामन्त्री तेन मेलितुम् अतिथिगृहं गतः । गुणनिधिः तं विनयेन प्रणम्य अपृच्छत् - ''मम आनयनस्य उद्देशः कः ?'' इति ।

''मया श्रुतं यत् भवान् दयाहृदयः इति । भवद्द्वारा कयोश्चित् पतिपत्न्योः समस्यायाः परिहारः भवतु इति उद्देशेन मया भवान् आनायितः'' इति उक्त्वा महामन्त्री तयोः दम्पत्योः कथां श्रावितवान् -

''सुमतिचन्द्रयोः प्रेमविवाहः । उभयोः अपि परस्परानुरागः महान् । अथ कदाचित् सुमत्याः माता अस्वस्था जाता । चन्द्रस्य मातापितरौ ऋणग्रस्तौ जातौ । तस्मिन् एव काले कश्चन मुनिः चन्द्रस्य विषये क्रुद्धः सन् शापं दत्तवान् यत् भवान् अकालवार्धक्यं प्राप्नोतु इति । चन्द्रेण बहुधा प्रार्थितः मुनिः



ान्तः भूत्वा – 'सप्ताहाभ्यन्तरे दयाहृदयः कश्चित् यदि स्वस्य अङ्गुष्ठस्य रक्तं भवतः शिरसि प्रोक्षति तर्हिः शापः अपगमिष्यति । किन्तु सः रक्तप्रोक्षणकर्ता भवतः बन्धुः न भवेत् इति तु नियमः' इति अवदत् ।''

एतां कथां श्रुतवान् गुणनिधिः आर्द्र-हृदयः जातः । अविलम्बेन चन्द्रः मया द्रष्टव्यः इति अवदत् सः । महामन्त्री राजा च गुणनिधिनाः सह चन्द्रस्य गृहं गतवन्तौ ।

गुणनिधिः चन्द्रेण सह वार्तालापम् अकरोत् । ततः चन्द्रस्य कष्टम् अधिकृत्य एकां कवितां सः अरचयत् । सा कविता नितरां प्रभावजनिका आसीत् । महामन्त्री राजा च अनयोः दम्पत्योः कथायाः काल्पनिकतां जानन्तौ अपि गुणनिधेः कवितां श्रुत्वा तु अश्रुपूर्णनेत्रौ सञ्जातौ ।

गुणनिधिः चन्द्रं तत्पत्नीं च उद्दिश्य अवदत् – ''एतस्मिन् प्रपञ्चे सामान्याः एव अधिकं कष्टम् अनुभवन्ति । भगवान् तान् एव आधिक्येन परीक्षते । किन्तु किमपि कष्टं कदापि न चिरस्थायि । शापदात्रा मुनिना यथा सूचितं तथा निश्चितावधेः समाप्तितः पूर्वम् एव कश्चन कोमलहृदयः भवत्समीपं प्रेष्यते भगवता'' इति ।

एतत् श्रुत्वा राजा आश्चर्येण मन्त्रिणः मुखम् अपश्यत् । अनन्तरं ते त्रयः अपि ततः निर्गताः ।

राजधानीं प्राप्य मन्त्री राजानम् अवदत् – ''महाराज ! गुणनिधिः कविमात्रम् । सः प्रभावोत्पादकशैल्या कवितां श्रावयितुं शक्नोति, किन्तु परोपकारं तु किञ्चिदपि न करोति । यः कष्टकाले जनानां साहाय्यं न करोति सः राजप्रतिनिधिः भवितुं न अर्हति । नेत्रयोः पुरतः कष्टं दृष्ट्वा अपि सः रक्तबिन्दुभिः प्रोक्षणं न चिन्तितवान्, प्रत्युत तादृशं भगवान् प्रेषयिष्यति इति उक्तवान् । यः कष्टानां निवारणाय स्वयम् उद्युक्तः न तं राजप्रतिनिधिं कुर्मः चेत् देशस्य न कोऽपि लाभः । कोमलहृदयत्वमात्रतः कोऽपि राजप्रतिनिधित्वं प्राप्तुं न अर्हति'' इति ।

राजा मन्त्रिणः कथनम् अङ्गीकृतवान् । स्वस्य विचारं चातुर्येण यत् अवगमितवान् तदर्थं मन्त्रिणम् अभिनन्दितवान् सः गुणनिधिं यथायोग्यं सत्कृत्य प्रेषितवान् ।



# वार्ताविशेषः

## 'डिजिटल्'ग्रन्थालयः




भारतीयः प्रथमः डिजिटल्ग्रन्थालयः केरले तिरुवनन्तपुरे आरब्धः अस्ति । राष्ट्रपतिना ए.पि.जे. अब्दुलकलामवर्येण एतस्य उद्घाटनं कृतम् । एतावता ३०,००० ग्रन्थानां चित्राङ्कनं कृतम् अस्ति तत्र । विविधाभिः भारतीयभाषाभिः रचितानां सार्धैकलक्षताडग्रन्था-दीनां स्थापनं प्रतिवर्षं करणीयम् इति योजना कृता अस्ति । एतस्य ग्रन्थालयस्य सम्पर्कः समग्रे देशे प्राप्तुं शक्यः । अमेरिकास्थस्य कार्नगीमेल्लन्विश्वविद्यालयस्य कैश्चित् विज्ञानिभिः आरब्धायाः वैश्विकग्रन्थालययोजनायाः अङ्गतया एषः डिजिटल्ग्रन्थालयः आरब्धः अस्ति ।

## निर्माल्यपुष्पेभ्यः वर्णोत्पत्तिः

देवालये उपयुज्यमानानां पुष्पाणां नूतनः उपयोगः चिन्तितः अस्ति देशे । तानि निर्माल्यपुष्पाणि अद्यपर्यन्तं तु क्षिप्यन्ते स्म । किन्तु इदानीं तेषां निष्पेषणं कृत्वा ततः वर्णोत्पादनम् आरब्धम् अस्ति । कोल्कतानगरस्थस्य जाधवपुरविश्वविद्यालयस्य शोधविज्ञानिनः तादृशेभ्यः पुष्पेभ्यः रक्त-पीत-नीलवर्णानाम् उत्पादनाय तन्त्रज्ञानं सज्जीकृतवन्तः सन्ति । ते च वर्णाः वस्त्रनिर्माणक्षेत्रे उपयोक्तुम् । वाणिज्यक्षेत्रे तेषां वर्णानाम् उपयोगः चिन्त्यमानः अस्ति इदानीं तैः । स्वस्य एषः शोधः वाणिज्यक्षेत्रे महते लाभाय कल्पेत इति अभिप्रयन्ति ते । भारते पुष्पोत्पादनक्षेत्रे प्रथमं द्वितीयं च स्थानं कर्णाटकतमिळुनाडुराज्ययोः । पश्चिमवङ्गस्य तृतीयं स्थानम् । तत्र प्रायः प्रतिदिनं ६५०० टन्मितानि पुष्पाणि उत्पाद्यन्ते । उत्पत्तेः अर्धभागः देवालयादीनां धार्मिकसंस्थानाम् उपयोगाय स्वीक्रियते इति वदति किञ्चन सर्वेक्षणम् ।





# हितावहस्पर्धाशीलता

भूपालः नारायणपुरस्य धनाढ्येषु अन्यतमः । करुणाहृदयः सः अर्थिनां साहाय्यम् अवश्यं करोति स्म । कदाचित् सः प्रातः पूजार्थं पुष्पाणि अवचिन्वन् आसीत् । तावता द्वादशवर्षीयः कश्चन बालकः तत्र आगतः । सः अपृच्छत् – ''श्रीमन् ! भूपालवर्यनामकः किं भवान् एव ?'' इति ।

''आम्, अहमेव भूपालः । कः भवान् ? किम् इष्यते मत्तः ?'' इति अपृच्छत् भूपालः ।

''मम नाम कृष्णः इति । भवतः गृहे कमपि उद्योगम् इच्छामि अहम्'' इति करौ योजयित्वा विनयेन अवदत् सः बालः ।

भूपालः हसन् अपृच्छत् – ''किं कार्यं कर्तुं शक्नुयात् भवान् ?'' इति ।

''यत् उच्यते तत् । बाल्ये एव अहं मातापितृविहीनः जातः । मातुलगृहे वसामि स्म । मातुलानी मत्तः सर्वाणि कार्याणि कारयति स्म । इदानीं मातुलानी अवदत् यत् भवान् अन्यत्र कुत्रापि गत्वा स्वस्य उदरं स्वयं पूरयतु इति । भवतः नाम सर्वत्र श्रूयते । अतः अहं भवत्समीपम् आगतः उद्योगप्राप्तये'' इति अवदत् कृष्णः ।

तदा भूपालः अवदत् – ''इदानीम् उद्योगावकाशः तु कोऽपि नास्ति मम गृहे । किन्तु यदि भवान् विद्याभ्यासं कर्तुम् इच्छेत् तर्हि साहाय्यं कुर्याम्'' इति ।

एतत् श्रुत्वा कृष्णः भूपालस्य पादाभिवन्दनं कृत्वा – ''विद्याभ्यासे महती रुचिः मम । मातुलानी एतस्मिन् वर्षे मम विद्याभ्यासं स्थगितवती आसीत्'' इति अश्रुपूर्णनेत्रः सन् अवदत् ।

भूपालः स्वस्य पुत्रं कृष्णस्य समवयस्कं रामम् आहूय – ''एतस्य बालस्य नाम कृष्णः इति । इतः परम् एषः अपि आत्मना सह प्रतिदिनं विद्यालयं प्रति नेतव्यः भवता'' इति अवदत् ।



"अस्तु तात !" इति उक्त्वा रामः कृष्णेन सह स्वस्य प्रकोष्ठं प्रति अगच्छत् ।

भूपालस्य पत्न्यै राजेश्वर्यै पत्युः एषः निर्णयः न अरोचत । सा असन्तोषेण अवदत् - "एवं कतिभ्यः अनाथेभ्यः भवान् आश्रयं दातुम् अर्हेत् ?" इति ।

"यावत्तु भगवतः अनुग्रहः तावद्धयः" इति हसन् अवदत् भूपालः ।

गृहकार्येषु राजेश्वर्याः साहाय्यं कुर्वन् कृष्णः रामेण सह विद्यालयं गच्छति स्म । एतावत्पर्यन्तं रामः एव सर्वासु परीक्षासु प्रथमः भवति स्म । किन्तु इदानीं कृष्णः तत् स्थानं प्राप्तवान्, रामश्च द्वितीयस्थानं गतवान् । एतत् ज्ञात्वा भूपालः पुत्रम् अवदत् - "कृष्णः भवत्तः अपि अधिक-बुद्धिमान् । अतः अध्ययने भवान् तस्य साहाय्यं स्वीकरोतु" इति ।

रामाय पितुः एतत् वचनं सर्वथा न अरोचत । सः मातरम् अवदत् - "अम्ब ! कृष्णं न केवलं गृहात्, अपि तु विद्यालयात् एव निष्कासनीयः । प्रथमस्थानं मया एव प्राप्तव्यम्" इति ।

तदा राजेश्वरी अवदत् - "अहं तु आदौ एव निराकृतिं प्रदर्शितवती आसम् । भवतः पित्रा मम वचनं न पुरस्कृतम् । एतत् तस्य फलम्" इति ।

ततः सा कृष्णम् आहूय अवदत् - "भोः ! इतः परं परीक्षासु कस्यचित् एकस्य प्रश्नस्य उत्तरं भवता सर्वथा न लेखनीयम् । अवगतं खलु ? " इति ।

"अम्ब ! अहं सर्वेषां प्रश्नानाम् उत्तराणि सम्यक् जानामि" इति राजेश्वरीम् आश्चर्येण पश्यन् अवदत् कृष्णः ।

"तथापि एकस्य प्रश्नस्य तु उत्तरं न लेखनीयम् एव भवता । एषा मम आज्ञा" इति कठोरस्वरेण अवदत् राजेश्वरी ।

एतदनन्तरं कृष्णः परीक्षायां प्रतिप्रश्न-पत्रम् एकस्य प्रश्नस्य उत्तरं न लिखितवान् । एतत् अध्यापके आश्चर्यम् अजनयत् । सः सानुरोधं यदा पुनः पुनः पृष्टवान् तदा कृष्णः कारणम् अवदत् । तदा अध्यापकः कृष्णस्य निमित्तं काञ्चित् विशेषपरीक्षां सञ्चाल्य तम् अग्रिमकक्ष्यां प्रति प्रेषितवान् । कृष्णस्य निर्गमनात् रामस्य सन्तोषः जातः ।

अध्यापकस्य मुखात् एतत् ज्ञातवान्

ष्णं प्रेषयता भवता योग्यम् एव कृतम् । तिभा अवश्यं पुरस्करणीया । किन्तु तस्मात् रामस्य शिक्षणं न जातम् । ईर्ष्या नुचिता, हितकरी स्पर्धा सर्वदा स्वागतीरणीया इति तेन न अवगतम् । रामः तमः बालकः यथा स्यात् तथा करणं वतः दायित्वम्'' इति ।

अध्यापकः किञ्चित् विचिन्त्य – ''अस्तु, मस्य स्वभावं परिष्कर्तुं यथाशक्ति प्रयत्नं रिष्यामि'' इति अवदत् ।

तदनन्तरदिने अध्यापकः कक्ष्यायां ाञ्चित् कथाम् अश्रावयत् – ''पूर्वं कश्चन जा आसीत् । युवराजः तस्य एकमात्रत्रः । सः अश्वचालने सुनिपुणः । 'अश्वालने युवराज-सदृशः अन्यः नास्ति' इति वदन्तः सर्वे तस्य प्रशंसां कुर्वन्ति स्म ।

एकदा युवराजेन कश्चन भिल्लतरुणः मिलितः । युवराजः यावता वेगेन अश्वं चालयति स्म ततोऽपि अधिकेन वेगेन अश्वं चालयति स्म सः । अतः युवराजस्य अनुचराः तस्य भिल्लस्य प्रशंसाम् आरब्धवन्तः । एतस्मात् भिल्लस्य विषये युवराजे ईर्ष्या उत्पन्ना ।

कदाचित् भिल्लः राजकुमारम् अवदत् – ''न केवलं वेगेन अश्वस्य चालनम्, अपि तु अन्यानि अपि बहूनि कौशलानि अहं भवन्तं बोधयितुम् अर्हामि'' इति ।

''किं भवत्तः बोधनं प्राप्तव्यं मया ? सर्वथा अपमानकरम् एतत् । इतः परं कदापि मुखं मा प्रदर्शयतु भवान्'' इति



कोपेन उक्त्वा ततः निर्गतवान् युवराजः ।

एकदा युवराजः अनुचरैः पृथग्भूत्वा अरण्ये सुदूरम् अगच्छत् । तदैव पर्वतदेवीं नमस्कृत्य प्रत्यागच्छन् भिल्लः युवराजं दृष्ट्वा प्रणम्य सम्भाषणं कर्तुम् ऐच्छत् । किन्तु युवराजः मुखं परिवर्त्य ततः निर्गतः ।

यावत् सः कानिचन पदानि अस्थापयत् तावता कश्चन व्याघ्रः आक्रमणाय तत्समीपम् आगच्छत् । युवराजः कोषतः खड्गम् आक्रष्टुम् उद्युक्तः । किन्तु तावता भीतः तदीयः अश्वः ततः धावनम् आरब्धवान् । व्याघ्रः अपि धावन् तस्य अनुसरणम् अकरोत् ।

एतत् दृष्टवान् भिल्लयुवकः स्वस्य अश्वं व्याघ्रस्य दिशि प्रेरितवान् । व्याघ्रं लक्ष्यीकृत्य स्वस्य शूलं क्षिप्तवान् च । तत् शूलं व्याघ्रस्य उरसि लग्नम् । तस्मात् व्याघ्रः गर्जन् एव भूमौ अपतत् ।

परिवृत्य दृष्टवान् युवराजः अवगतवान् यत् किं प्रवर्तमानम् अस्ति इति । सः अश्वं भिल्लयुवकस्य समीपम् आनीय - "अश्वसञ्चालने निपुणतरः भवान् कस्मिन् समये कथं व्यवहरणीयम् इत्यपि जानाति । भवता मम प्राणाः रक्षिताः । अहं कृतज्ञः अस्मि" इति कृतज्ञतापूर्वकम् अवदत् ।

एवं कथां समाप्य अध्यापकः अवदत् - "युवराजः यदि भिल्लयुवकतः अश्वचालनकौशलं ज्ञातवान् स्यात् तर्हि व्याघ्रस्य सम्मुखीकरणे सः विफलः न अभविष्यत् । मानवः आजीवनं विद्यार्थी एव । यत् न ज्ञायते तत् अन्यतः ज्ञातुं सङ्कोचः न करणीयः । अन्यतः ज्ञानात् मम गौरवं हीयते इति कदापि न चिन्तनीयम् । ईर्ष्या न उचिता । हितावहस्पर्धाशीलता अस्ति चेत् एव विकासः शक्यः" इति । एवं वदन् सः रामस्य मुखं पश्यन् एव आसीत् ।

अनन्तरदिने रामः अध्यापकम् अवदत् - "आचार्यवर्य ! मम निमित्तम् अपि विशेषपरीक्षाम् आयोजयतु । यदि अहं तत्र उत्तीर्णः स्यां तर्हि माम् अपि अग्रिमकक्ष्यां प्रति प्रेषयतु । अहम् अपि कृष्णेन सहैव पठिष्यामि" इति ।

रामे जातं परिवर्तनं दृष्ट्वा अध्यापकः नितरां सन्तुष्टः जातः ।





# वैश्विकशान्तये ज्योतिः



गतस्य अक्टोबर्मासस्य त्रयोदशे दिनाङ्के अष्टाविंशतितमीनाम् ओलम्पिक्क्रीडानाम् आयोजनसमित्या अथेन्स्नगरे भारतविषये विशिष्टः कश्चन आदरः दर्शितः । ओलम्पिक्दीपस्य 'रिले' निमित्तम् ऐदम्प्राथम्येन भारतदेशः चितः अस्ति तया । गतस्य मार्च्मासस्य २५ तमे दिनाङ्के ओलम्पिक्ज्योतिः प्रवर्तितम् । तस्मात् दिनात् आरब्धा तस्य ज्योतिषः यात्रा समीपस्थेषु पञ्चसु देशेषु सञ्चरति । जून्मासस्य दशमे दिनाङ्के सा च यात्रा भारतं प्राविशत्, असंख्यानां क्रीडाप्रियाणां हृदयेषु क्रीडाप्रीतिम् उद्दीपयत् च ।

एवं दीपस्य ज्वालनं, क्रीडासमये आन्तं दीपस्य रक्षणं च क्रि. पू. ७७६ तमे वर्षे आरब्धम्, ११०० वर्षाणि यावत् अनुवृत्तं च । ततः स्थगिता एषा परम्परा १८९६ तमे वर्षे पुनरारब्धा । तन्नाम सार्धैकसहस्रवर्षाणाम् अनन्तरं तस्याः परम्परायाः पुनरारम्भः जातः । ओलम्पिक्ज्योतिषः प्रथमप्रवर्तनं तु आम्स्टर्डम्स्पर्धायां १९२८ तमे वर्षे जातम् । 'रिले' तु १९३६ तमे वर्षे बर्लिन्स्पर्धायाम् आरब्धम् ।

एतस्मिन् दीपप्रवर्तनसमारम्भे ११ अर्चिकाः उपस्थिताः भवन्ति । प्रमुखा अर्चिका निम्नमध्यकाचस्य साहाय्येन सूर्यकिरणानां द्वारा अग्निं प्रवर्तयति । ततः तत् ज्योतिः क्रीडास्थलं प्रति नीयते । एकैकोऽपि धावकः एतत् ज्योतिः गृहीत्वा किञ्चिद्दूरं धावित्वा अपरस्मै धावकाय ददाति । अन्तिमः दीपधारी तु आतिथेयस्य राष्ट्रस्य क्रीडापटुः एव भवति सर्वदा । सः/सा क्रीडाङ्गणस्य परिक्रमणं कृत्वा अन्ते तेन ज्योतिषा ओलम्पिक्दीपं ज्वालयति । क्रीडासमाप्तिपर्यन्तम् एषः दीपः ज्वलति । अन्ते विशेषसमारम्भे एतस्य निर्वापणं भवति ।

अथेन्स्क्रीडानां सन्देशः अस्ति - *'ज्योतिः सञ्चारयत, जगन्मैत्रीं वर्धयत'* इति । भारतस्य देहलीनगरं प्रति तत् ज्योतिः आनयन्तः आयोजकसमितेः सदस्याः अवदन् - ''ओलम्पिक्-आन्दोलनाय भारतेन यत् महत् उपायनं दत्तं तद् अस्माभिः अभिज्ञातम् अस्ति । अथेन्स्क्रीडां प्रति सर्वान् भारतीयान् सहार्दं निमन्त्रयन्तः स्मः वयम्'' इति ।



# पर्वतस्था विलक्षणा राक्षसी

प्राचीने काले थीब्स्नामके प्रदेशे प्रमुखस्य कस्यचन मार्गस्य पार्श्वे स्थितस्य पर्वतस्य उपरि काचित् विलक्षणा महिला निवसति स्म । तस्याः मुखं महिलायाः इव । किन्तु शरीरं सिंहस्य इव । तस्याः पुच्छम् अपि आसीत् । तच्च सर्पाकारकम् । तस्याः पादाः शुनकस्य इव । अतः जनाः तां 'राक्षसी' इति निर्दिशन्ति स्म ।

तेन मार्गेण बहवः न सञ्चरन्ति स्म । ये केचन तेन मार्गेण आगच्छन्ति तान् एषा राक्षसी स्थगयति स्म ।

प्रयाणसमये अकस्मात् उद्भूतां तस्याः आज्ञां श्रुत्वा प्रयाणिकाः आश्चर्य-चकिताः सन्तः ताम् एव निर्निमेषं पश्यन्तः तिष्ठन्ति स्म ।



''यावत् मम प्रश्नस्य उत्तरं न दीयते तावत् इतः अग्रे गन्तुं, पलायनं कर्तुं वा अवसरः नास्ति । सूर्यास्तात् पूर्वम् उत्तरं वक्तव्यम् । यदि तत् कर्तुं न शक्येत तर्हि प्राणवियोगः प्राप्तव्यः भविष्यति भवता'' इति वदति स्म सा राक्षसी ।

तस्याः प्रश्नः भवति स्म - ''प्रातःकाले चतुर्भिः पादैः, मध्याह्ने पादाभ्यां (पाद-द्वयेन) सायं च त्रिभिः पादैः सञ्चरन् जीवः कः ?'' इति ।

यात्रिकः एतस्य उत्तरं

जानाति स्म । यथा यथा क्षणाः गच्छन्ति तथा तथा उद्वेगः अपि वर्धते स्म । अस्ताचले स्थितः सूर्यः रक्तवर्णेन प्रकाशमानः सन् यदा अदृश्यतां गच्छति तदा सा राक्षसी उत्प्लुत्य तं यात्रिकं गृहीत्वा तदीयं शरीरम् खण्डशः करोति स्म ।

एवमेव शतशः वर्षाणि अतीतानि । अथ कदाचित् श्रेष्ठः नायकः ओडोपसः तेन मार्गेण गच्छन् आसीत् । सहजतया राक्षस्याः दृष्टिः तस्य उपरि पतिता । सा तस्य गमनं स्थगयित्वा यथापूर्वं प्रश्नं पृष्टवती । ओडोपस् हसन् अवदत् - ''भवत्याः प्रश्नस्य उत्तरम् अहम् एव'' इति ।

''भवतः उत्तरस्य आशयः कः ? विशदयतु तावत्'' इति अवदत् राक्षसी ।

''भवत्या पृष्टं खलु - तादृशः विलक्षणः जीवी कः इति ? सः जीवी मानवः एव । प्रातःकालः नाम बाल्यम् । बाल्ये सः चतुर्भिः पादैः गच्छति । बाल्ये हस्तौ अपि पादायेते । चङ्क्रमणसमये सः हस्ताभ्यां पादाभ्यां च सञ्चरति खलु ? मध्याह्नः नाम मानवस्य तारुण्यकालः । तस्मिन् काले सः पादाभ्यां गच्छति । जीवनस्य सन्ध्याकाले सः दण्डसाहाय्येन सञ्चरति । सः दण्डः एव तदीयः तृतीयः पादः । एवं मानवः प्रातः पादचतुष्टयेन, मध्याह्ने पादाभ्यां, सायं त्रिभिः पादैः च सञ्चरति'' इति अवदत् ओडोपस् ।

यदा एतत् उत्तरं प्राप्तं तदा राक्षसी अधः पतितवती, मरणं प्राप्तवती च ।

सा एव राक्षसी स्पिङ्क् इति प्रसिद्धा ।



यदा जटिला समस्या उपस्थिता भवति तदा सा निर्दिश्यते 'स्पिङ्क्समस्या' इति । तया राक्षस्या पृष्टः प्रश्नः एव पुराणक्षेत्रे विशिष्टा अर्थपूर्णा समस्या इति प्रसिद्धा । मानवः आत्मानं सम्यक् न जानाति इत्यतः एव मरणं प्राप्नोति । यदा सः आत्मज्ञानं प्राप्नोति तदा स्वस्य अमरत्वस्य ज्ञानम् अपि भवति तस्य । तदा मरणम् एव अवास्तविकी इत्यपि जानाति सः । एतस्यां कथायां स्पिङ्क् मरणस्य सङ्केतः । उपनिषत्सु यत् उच्यते तदेव उक्तम् अस्ति एतस्यां कथायाम् अपि । मानवः (तन्नाम आत्मा) अमरः । स्वस्य अज्ञानस्य कारणतः मानवः मरणं प्राप्नोति । यदा स्वस्वरूपज्ञानं भवति तदा न भवति मरणभयम् ।



# प्रासादशुनकानां कृत्यम्

सहस्राधिकवर्षेभ्यः पूर्वतनी घटना एषा । तदा काशीराज्यं ब्रह्मदत्तः नाम राजा पालयति स्म । तस्मिन् काले बोधिसत्त्वः नगरसीमायां स्थिते श्मशाने शुनकरूपेण जन्म प्राप्तवान् आसीत् । शुनकानां चक्रवर्ती आसीत् सः ।

कदाचित् पर्यटनार्थं गतः राजा सूर्यास्त-समये प्रासादं प्रत्यागतवान् । परिचारकाः रथात् अश्वान् विमोच्य अश्वशालां प्रति नीत्वा बद्धवन्तः । रथं च प्रासादस्य पुरतः एव स्थापितवन्तः ।

तद्दिने रात्रौ महती वृष्टिः जाता । तस्मात् रथः अपि आर्द्रः जातः । राजभवने पालिताः शुनकाः आगत्य रथस्य चर्मावरणं दष्ट्वा नाशितवन्तः ।

अनन्तरदिने परिचारकाः राजानम् एतम् अंशम् उक्तवन्तः । राजा क्रुद्धः सन् आज्ञापित-वान् - ''किं शुनकाः मम सुन्दरस्य रथस्य हानिं कल्पितवन्तः ? ये ये शुनकाः दृष्टिपथम् आगच्छन्ति तान् सर्वान् मारयन्तु'' इति ।

राज्ञः आदेशस्य अनुगुणं राज्ये सर्वत्र शुनकानां संहारः आरब्धः । केचन शुनकाः कथञ्चित् आत्मरक्षणं कृत्वा श्मशानवासिनः बोधिसत्त्वस्य समीपं गत्वा निवेदितवन्तः - ''महाशय ! केचन शुनकाः रथस्य चर्मवस्तूनि नाशितवन्तः इति श्रूयते । तस्मात् राजा देशे स्थितानां सर्वेषां शुनकानां संहारम् आज्ञापित-वान् अस्ति'' इति ।

शुनकानां द्वारा एतां वार्तां श्रुत्वा बोधि-सत्त्वः नितरां खिन्नः । 'रथः तु प्रासादस्य पुरतः एव आसीत् । तस्मात् स्पष्टं यत् प्रासादे पालिताः शुनकाः एव रथस्य वस्तूनि नाशित-वन्तः इति । दूरस्थाः शुनकाः एतत् कार्यं कर्तुं न अर्हन्ति । ये दोषं कृतवन्तः तेषाम् अन्वेषणं कृत्वा राज्ञः पुरतः उपस्थाप्य निरपराधनः अन्ये शुनकाः मया रक्षणीयाः'

इति अचिन्तयत् बोधिसत्त्वः ।

ततः सः शुनकान् अवदत् - "भीतिः मास्तु भवताम् । अहं राजसमीपं गत्वा शुनकसंहारं स्थगयिष्यामि । तावत् भवन्तः अत्रैव तिष्ठन्तु निश्चिन्ततया" इति ।

'धर्मस्य विजयः भवतु । राजा न्यायस्य पालनं करोतु' इति मनसि एव वदन् सः राजास्थानं प्रति गतवान् ।

तस्मिन् समये राजा सिंहासने उपविश्य न्यायदानकार्ये मग्नः आसीत् । बोधिसत्त्वः कथञ्चित् आस्थानं प्रविश्य सिंहासनस्य अधोभागतः निर्गत्य राज्ञः पुरतः उपस्थितः जातः । राजभटाः तं ग्रहीतुम् उद्युक्ताः जाताः । राजा तान् निवारितवान् ।



बोधिसत्त्वः राजानं प्रणम्य अवदत् - "महाराज ! मया श्रुतं यत् राज्यस्थाः सर्वे शुनकाः संहरणीयाः इति भवता आज्ञा कृता अस्ति इति । किं वा अपराद्धं शुनककुलेन ?" इति ।

तदा राजा अवदत् - "तैः रथस्य उपकरणानि सर्वाणि नाशितानि । अतः एव मया एतादृशी आज्ञा कृता अस्ति" इति ।

"अपराधः कैः शुनकैः कृतः इति किं भवता ज्ञायते ?" इति अपृच्छत् बोधिसत्त्वः ।

"नैव ! मया न ज्ञायते" इति निराकरण-पूर्वकं शिरः चालयन् अवदत् राजा ।

तदा बोधिसत्त्वः अवदत् - "यैः अपराधः कृतः तेषाम् अन्वेषणाय प्रयत्नम् अकृत्वा देशस्थानां सर्वेषां शुनकानां मारणं करणीयम् इति आज्ञाकरणं किं न्याय्यम् ? भवतः सेवकाः किं सर्वेषां शुनकानां संहारं करिष्यन्ति, उत केभ्यश्चित् शुनकेभ्यः सजीवं स्थातुम् अवकाशं यच्छन्ति ?" इति ।

"राज्ये स्थितानां सर्वेषाम् अपि शुनकानां संहारः करणीयः इति मया आज्ञा कृता अस्ति" इति अवदत् राजा ।

"किं प्रासादे स्थितानाम् अपि मारणं क्रियते भवत्सेवकैः ?" इति पुनः अपृच्छत् बोधिसत्त्वः ।

क्षणकालं विचिन्त्य राजा अवदत् - "न"

तदा बोधिसत्त्वः अवदत् - "कैः अपराधः कृतः इति अजानन् अपि भवान् प्रासादस्थानां शुनकानां विषये कृपां प्रदर्शयन् अन्येषां संहाराय आज्ञां कृतवान् अस्ति । किम् एषः पक्षपातः न ? द्वेषेण अविवेकेन च आज्ञा कृता भवता । पक्षपातः, द्वेषः, अविवेकः, भीतिः च राज्ञि सर्वथा न भवेयुः" इति ।

राजा क्षणकालं विचिन्त्य - ''किं भवान् स्वस्य बुद्धेः उपयोगं कृत्वा वक्तुं शक्नुयात् यत् कैः रथस्य चर्म उपकरणानि च नाशितानि इति ? अहम् अपराधं कृतवतः शुनकान् दण्डयिष्यामि'' इति अवदत् ।

''अपराधः तु प्रासादस्थैः शुनकैः एव कृतः । एतत् सप्रमाणं निरूपयिष्यामि अहम्'' इति अवदत् बोधिसत्त्वः ।

''कैः अपराधः कृतः इति यदि भवता सप्रमाणं निरूपयिष्यते तर्हि अहं मम आज्ञां प्रतिस्वीकरिष्यामि'' इति अवदत् राजा ।

ततः बोधिसत्त्वः तक्रं तृणं च आनायितवान् । तृणानां पेषणं कृत्वा रसं निष्पाद्य तक्रे तस्य रसस्य मेलनं कारितवान् । ततः तत् तक्रं शुनकेभ्यः पातुं दत्तम् ।

तत् पीतवन्तः प्रासादशुनकाः द्वित्र-क्षणाभ्यन्तरे वमनम् आरब्धवन्तः । तदा रथोपकरणं खादितवतां मुखात् चर्मखण्डाः अपि निर्गताः ।

एतत् दृष्ट्वा राजा आश्चर्यम् अनुभूतवान् । बोधिसत्त्वः राजानम् अवदत् - ''महाराज ! भवतः परिचारकाः शुनकेभ्यः पर्याप्तमात्रेण आहारं न यच्छन्ति प्रतिदिनम् । तस्मात् एव एते प्रासादशुनकाः रथस्य चर्मादिकं खादितवन्तः'' इति ।

नितरां सन्तुष्टः राजा - ''शुनकरूपेण स्थितः बोधिसत्त्वः एव एषः । अन्यः कोऽपि एवं व्यवहर्तुं नार्हति'' इति उक्त्वा श्वेतच्छत्रदानपुरस्सरं तस्य पूजां कृतवान् । बोधिसत्त्वः राजानं धर्मम् उपदिश्य श्मशानं प्रति गतः ।

एतदनन्तरं राजा प्रासादस्य शुनकानां पालकान् आनायितवान् । विचारणात् ज्ञातं यत् ते शुनकेभ्यः अल्पम् एव आहारं यच्छन्तः धनम् अपहरन्ति स्म इति । राजा तान् यथायोग्येन दण्डेन दण्डयित्वा नूतनान् सेवकान् तस्मिन् कार्ये नियोजितवान् ।

ततः राजा दुर्गस्थेभ्यः शुनकेभ्यः यथा, तथैव राज्यस्य सर्वेभ्यः अपि शुनकेभ्यः उत्तमस्य आहारस्य दानाय व्यवस्थाम् उपकल्पितवान् । प्रतिदिनं बोधिसत्त्वस्य उपदेशं शृण्वन् सः उत्तमं जीवनं यापितवान् ।

बोधिसत्त्वः बहूनि वर्षाणि यावत् राजानम् अन्यान् जनान् च धर्मम् उपदिष्टवान् । सर्वान् अपि मुक्तिमार्गेण नीतवान् सः ।





# विष्णुपुराणम्

बलिचक्रवर्ती सुतललोकं प्राप्य पातालस्य सम्राट् सन् प्रतिदिनं विष्णोः चरणयोः अर्चनं करोति स्म। देवैः स्वर्गः प्रतिप्राप्तः। इन्द्रोऽपि स्वर्गाधिपत्यं पुनरपि प्राप्तवान्।

बलेः आवासस्थानस्य सुतलस्य द्वारं वामनः दण्डधरः सन् रक्षति स्म। तेषु एव दिनेषु रावणः सुतलं विजेतुम् आगतवान्। एषः वामनः मां कथम् अवरोद्धुं शक्नुयात् इति चिन्तयन् गर्वेण सः अग्रे गतः। तदा विष्णुः महारूपं धृत्वा अङ्गुष्ठेन रावणं नुन्नवान्। तेन लङ्कायां पतितः रावणः विसंज्ञः जातः। तदनन्तरं कदापि रावणेन पाताललोकः कटाक्षेण अपि न दृष्टः।

बलिचक्रवर्ती आत्मना शासितान् प्रदेशान् वर्षे एकवारं वा अदृश्यरूपेण गत्वा सम्यक् परिशीलयति स्म। भूलोकस्य सुसम्पन्नतां, शान्तिपूर्णतां, शस्यश्यामलतां च प्रतिवर्षं परीक्षते स्म सः। सः सस्येषु पुष्टिं जीवनशक्तिं च पूरयति स्म। कृमिकीटादीन् अपि रक्षति स्म। अतः तस्य स्वागतार्थम् एव दीपावलीपर्वाचरणं, प्रतिपदि तस्य विशेषपूजा च आरब्धा। वामनः त्रिविक्रमः सन् आकाशम् अभिव्याप्य विजयं यत् प्राप्तवान् तस्य स्मरणाय आकाशदीपानां ज्वालनम् अपि आरब्धम्।

पृथिवीं प्रति बलेः आगमनाय दक्षिणमहासमुद्रे द्वाररूपेण एकः द्वीपः उत्पन्नः। सः एव 'बाली'द्वपः इति विख्यातः जातः।

बलिचक्रवर्तिनः वंशजाः पल्लवराजाः तदीयं नाम चिरस्थायि कर्तुम् इच्छन्तः शिल्पवैभवोपेतं महाबलिपुरं निर्मितवन्तः।



काञ्चीपुरे त्रिविक्रमवामनावतारमूर्तिः प्रतिष्ठापिता जाता । एवं बलिचक्रवर्तिनः यशः शाश्वतं जातम् ।

बलेः शासनकाले ये क्षत्रियाः आसन् ते अनुशासनपालकाः आसन् । किन्तु अनन्तरकाले ते विशृङ्खलाः जाताः । ते जनतां विविधैः प्रकारैः पीडयन्ति स्म । तेषाम् अत्याचारस्य कारणतः जनतायाम् असन्तोषः प्रसृतः । पीडिताः जनाः स्वस्य राजानं सदा निन्दन्ति स्म । राज्यानि विभक्तानि । लघूनि राज्यानि निर्मितानि । राजानः परस्परकलहे निमग्नाः । तस्मात् ते दुर्बलाः जाताः । सर्वत्र अराजकता प्रसृता । मात्स्यन्यायः सर्वत्र विजृम्भते स्म । यः शक्तिशाली भवति तस्यैव सर्वश्रेष्ठता । सः एव सर्वान् शास्ति स्म ।

तस्मिन् एव काले दशावतारेषु अन्यतमः षष्ठः परशुरामावतारः जातः । यथा अरण्ये काष्ठानि छिद्यन्ते तथा परशुरामः एकविंशतिवारं भूभ्रमणं कृत्वा सर्वान् क्षत्रियान् निर्मूलितवान् ।

तस्मिन् काले राजराजः हैहयचक्रवर्ती कार्तवीर्यार्जुनः सुदर्शनचक्रस्य अंशेन युक्तः सन् जन्म प्राप्तवान् आसीत् ।

पूर्वं कदाचित् विष्णुः योगनिद्रायां निमग्नः आसीत् । तदा शङ्खचक्रयोः विवादः उत्पन्नः । चक्रम् अवदत् - "सहस्रकिरणस्य सूर्यस्य रजोभिः विश्वकर्मा मम निर्माणं कृतवान् । सहस्रकिरणैः युक्तः अहम् असंख्यानां राक्षसानां संहारं कृतवान् । मां धृतवान् विष्णुः 'चक्री' इति ख्यातिं प्राप्तवान् । भवान् तु ध्वन्युत्पादनमात्रे समर्थः । अन्यत् किमपि साधयितुं सामर्थ्यं नास्ति भवतः" इति ।

एतस्मात् नितरां कुपितः पाञ्चजन्यशङ्खः अवदत् - 'हे चक्रपुरुष ! महान् गर्वः भवतः । भवान् गर्वितराजरूपेण पृथिव्यां जन्म प्राप्स्यति । विष्णुः मुनिपुत्रत्वेन जन्म प्राप्य काष्ठच्छेदकेन परशुना भवतः गर्वस्य भङ्गं करिष्यति' इति ।

शापग्रस्तः चक्रपुरुषः कार्तवीर्यार्जुनरूपेण जन्म प्राप्तवान् । सः हैहयसाम्राज्यं चतसृषु दिक्षु प्रसारितवान् । सः भगवतः अवतारभूतस्य दत्तात्रेयस्य परमभक्तः आसीत् । दत्तात्रेयस्य अनुग्रहेण कार्तवीर्यार्जुनः अणिमादिसिद्धीः प्राप्तवान् आसीत् । विविधैः आयुधैः भूषिताः सहस्रं

हस्ताः प्राप्तुम् अपि अर्हति स्म सः ।

एवम् उक्त्वा सुतमहर्षिणा क्षणकालं कथनं स्थगितम् । तदा नैमिषारण्यस्थाः मुनयः उक्तवन्तः – ''मुनीन्द्र ! दत्तात्रेयः भगवतः अवतारभूतः इति उक्तं खलु भवता ? किमर्थं दत्तात्रेयस्य अवतारः जातः ? तस्य कथां श्रावयतु । वयं सर्वे तस्याः श्रवणे समुत्सुकाः स्मः'' इति ।

ततः सूतेन दत्तात्रेयकथा आरब्धा –

अत्रिमहर्षिः पुत्रकामनया भगवन्तं विष्णुं भक्त्या ध्यायन् घोरं तपः आरब्धवान् ।

विष्णुः ब्रह्मणा शिवेन च सह प्रत्यक्षीभूय महर्षिम् अवदत् – ''वयं त्रयः अभिन्नाः । अतः त्रयाणाम् अपि मूर्तीनाम् अंशेन युक्तः सन् अहं भवतः पुत्रत्वेन जन्म प्राप्स्यामि । दत्तात्रेयः इति मम नाम भविष्यति'' इति । ततः ते त्रयः अपि अदृश्यतां गताः ।

एतस्मिन् काले नारदः त्रिमूर्तीनां पत्नीत्वेन गर्वं वहन्तीनां लक्ष्मी-सरस्वती-पार्वतीनां समीपं गत्वा अत्रिमहामुनेः पत्न्याः अनसूयायाः पातिव्रत्यमहिमानं वर्णितवान् । त्रिमूर्तीनां पत्नीभिः यत् कर्तुं न शक्यं तादृशानि बहूनि कार्याणि कृतवती आसीत् अनसूया ।

गङ्गां पीडयतः पापपिशाचान् निर्मूलान् कृतवती आसीत् सा । नारदतः प्राप्तान् लोहचणकान् पक्त्वा पाकं कृतवती आसीत् सा । सूर्योदयम् एव अवरुद्धवत्याः सुमत्याः मनःपरिवर्तनं साधयित्वा सूर्योदयः जातः चेत् यस्य मरणं भविष्यति इति निश्चितम् आसीत् तम् उज्जीवितवती आसीत् सा ।





एतत्सर्वं श्रुतवतीनां तिसृणां देवीनां मनसि अनसूयायाः विषये ईर्ष्या उत्पन्ना । अनसूयायाः पातिव्रत्यस्य नाशनाय ताः स्वपतीः तस्याः समीपं प्रेषितवत्यः ।

ब्रह्मा विष्णुः महेश्वरः च यतिवेषं धृत्वा अत्रिमहामुनेः आश्रमं प्रति गतवन्तः । 'भवति, भिक्षां देहि' इति वदन्तः आश्रमस्य पुरतः स्थितवन्तः च ।

तस्मिन् समये अत्रिमहामुनिः अतिथि-सत्कारदायित्वम् अनसूयायै समर्प्य तपसः निमित्तं गतवान् आसीत् ।

अनसूया तान् स्वागतीकृत्य भोजनाय निमन्त्रितवती । तदा ते कपटयतयः अवदन् – ''हे साध्वि ! अस्माकं कश्चन नियमः अस्ति । भवती नग्ना सती परिवेषयति चेदेव वयं भोजनं करिष्यामः'' इति ।

''एवम् !'' इति उक्त्वा अनसूया तेषाम् उपरि जलस्य प्रोक्षणं कृतवती । तदा ते त्रयः अपि शिशुरूपं प्राप्तवन्तः ।

अनसूयायाः हृदये वात्सल्यभावः उत्पन्नः । सा तेभ्यः शिशुभ्यः क्षीरम् अन्नं च दत्तवती । त्रिमूर्तयः अनसूयायाः अङ्के सुखेन शयितवन्तः ।

तान् आन्दोलिकायां शाययित्वा – ''त्रीन् लोकान् शासन्तः त्रिमूर्तयः मम शिशवः जाताः सन्ति । अहो, मम परमसौभाग्यम् ! ब्रह्माण्डः एव एतेषाम् आन्दोलिका । चत्वारः वेदाः एव आन्दोलिकायाः आधाराः । प्रणवनादः एव एतेषां निमित्तम् आन्दोलिकागीतम्'' इत्येतस्य अर्थस्य अभिव्यञ्जकम् आन्दोलिकागीतं गीतवती ।

तस्मिन् समये कश्चन श्वेतः वृषभः, गरुडः, कश्चन राजहंसः, चत्वारः शुनक-शिशवः, कश्चन नागः च तत्र उपस्थिताः अभवन् ।

तस्मिन् एव समये 'महती'वीणया नीलम्बरीरागम् आलपन् नारदः अपि तत्र आगतः । तम् अनुसरन्त्यः लक्ष्मीः, सरस्वती, पार्वती च तत्र उपस्थिताः ।

नारदः अनसूयाम् अवदत् – ''पतिभिः सम्बद्धाः पशवः अपि उपस्थिताः इत्यतः एताः देव्यः अत्र उपस्थिताः सन्ति । एताः महत् पतिवियोगदुःखम् अनुभवन्त्यः सन्ति । अतः एतासां पतीन् प्रत्यर्पयतु कृपया'' इति ।

तदा अनसूया तिस्रः अपि देवीः प्रणम्य – ''एतस्याम् आन्दोलिकायां स्थिताः

शिशवः यदि भवतीनां पतयः तर्हि तान् नेतुम् अर्हन्ति भवत्यः'' इति अवदत् ।

तिस्रः अपि देव्यः आश्चर्यचकिताः स्तब्धाः च । तत्र आन्दोलिकायां समानरूपाः त्रयः शिशवः गाढनिद्रायां निमग्नाः आसन् । पतीनाम् एतां स्थितिं दृष्ट्वा लज्जया ताः मौनेन स्थितवत्यः । तदा नारदः अवदत् - ''किं भवत्यः पतिम् अभिज्ञातुं न शक्ताः ? किं लज्जया ? शीघ्रं स्वपतिम् उन्नयन्तु तावत्'' इति । देव्यः लज्जया एव अग्रे गत्वा एकैकं शिशुम् उन्नीतवत्यः ।

तासां हस्तं गताः शिशवः त्रिमूर्तिरूपतां प्राप्तवन्तः । तदा सरस्वत्याः हस्ते शिवः, लक्ष्म्याः हस्ते ब्रह्मा, पार्वत्याः हस्ते विष्णुः च स्थिताः आसन् । एतस्मात् तिस्रः अपि देव्यः अवनतशिरस्काः जाताः । ब्रह्मविष्णुमहेश्वराः अपि ताभ्यः पृथग्भूत्वा अखण्डतां प्राप्तवन्तः इव एकीभूय स्थितवन्तः ।

तस्मिन् समये अत्रिमहर्षिः तत्र उपस्थितः । ब्रह्मविष्णुमहेश्वरान् स्वगृहे उपस्थितान् दृष्ट्वा सः तान् भक्त्या नमस्कृतवान् । तावता तेषां त्रयाणां सङ्गमतः दत्तात्रेयरूपम् उपस्थितम् आसीत् ।

मध्यभागे विष्णोः, पार्श्वयोः ब्रह्ममहेश्वरयोः च मुखं धृत्वा हस्तेषु शङ्खचक्रगदापद्मत्रिशूलकमण्डलूः वहन्, कण्ठे भिक्षापात्रं धरन् दत्तात्रेयः अनसूयात्र्योः पुत्रत्वं प्राप्तवान् ।

नारदः दत्तात्रेयस्य स्तुतिं कृतवान् । शिवस्य वाहनं नन्दी तर्णकरूपेण तस्य पृष्ठतः अतिष्ठत् । चत्वारः वेदाः शुनकरूपं



प्राप्य तं परितः अतिष्ठन् । सर्पः, हंसः, गरुडः च तस्मिन् परिसरे विहारम् आरब्धवन्तः । दत्तात्रेयः महर्षिरूपेण सदा वने एव विचरन् आत्मान्वेषणे उद्युक्तः जातः । अनेकासां सिद्धीनां, दिव्यानां शक्तीनां च प्रदाता दत्तात्रेयः हैहयवंशीयानाम् अपि आराध्यदेवः जातः ।

कार्तवीर्यार्जुनः दत्तात्रेयस्य पूजां कृत्वा महाशक्तिशाली भूत्वा विशालसेनया सह विजययात्रार्थं प्रस्थितः ।

जमदग्नेः पुत्रेषु रामः अन्तिमः । सः सदा परशुं गृहीत्वा आश्रमनिर्माणादिकं कुर्वन् भूमिं कृषियोग्यं च कुर्वन् अरण्यस्थान् वृक्षान् कर्तयन् भवति स्म ।

हिमालये तपः कृत्वा सः शिवं तोषितवान् । प्रसन्नः शिवः तस्मै शक्ति-

शालिनं परशुं दत्तवान् । तं परशुं धरन् सः 'परशुरामः' इति ख्यातः जातः । सः भृगुवंशे जातः आसीत् इत्यतः 'भार्गवरामः' इत्यपि नाम आसीत् तस्य ।

कदाचित् परशुरामस्य माता रेणुकादेवी नदीं गता विलम्बेन प्रत्यागता । जमदग्निः स्वस्य दिव्यदृष्ट्या दृष्ट्वा ज्ञातवान् यत् नदीतीरे सा किं कुर्वती आसीत् इति ।

चित्ररथः नाम गन्धर्वः अप्सरोभिः सह जलक्रीडायां मग्नः आसीत् । एतत् दृश्यं तन्मयतया पश्यन्ती स्थितवती आसीत् रेणुका । एतत् ज्ञातवान् जमदग्निः नितरां कुपितः । सः पुत्रान् आदिष्टवान् यत् मातुः शिरः कर्त्यताम् इति । किन्तु परशुरामस्य अग्रजाः निराकृतिम् उक्तवन्तः । अरण्यतः आगच्छन्तं परशुरामम् अपि जमदग्निः तदेव कार्यम् आदिष्टवान् ।

परशुरामः एतस्य निराकरणम् अकुर्वन् मातुः भ्रातॄणां च शिरः कर्तितवान् ।

सन्तुष्टः जमदग्निः अवदत् - ''वत्स ! भवान् यत् इच्छति तत् प्रार्थयतु'' इति ।

''मम माता भ्रातरः च उज्जीविताः भवन्तु'' इति प्रार्थितवान् परशुरामः ।

जमदग्निः तान् उज्जीवितवान् । परशुरामस्य तपोनिष्ठताम्, आज्ञाकारितां, बुद्धिमत्तां च दृष्ट्वा सन्तुष्टः जमदग्निः आशीर्वादेन अनुगृह्णन् अवदत् - ''चिरञ्जीवी भवतु भवान्'' इति ।

कार्तवीर्यार्जुनः विजययात्रां समाप्य स्वस्य राजधानीं माहिष्मतीं प्रति आगच्छन् आसीत् । मध्येमार्गं तेन जमदग्नेः आश्रमः दृष्टः । राजा नितरां बुभुक्षितः आसीत् । सैनिकाः अपि तथैव ।

जमदग्निः कामधेनोः अंशेन युक्तायाः होमधेन्वाः अनुग्रहेण तेभ्यः सर्वेभ्यः भोजनं व्यवस्थापितवान् । सा धेनुः असंख्यानां जनानाम् अपि इच्छां पूरयितुं समर्था आसीत् । 'यदि एषा धेनुः मम समीपे स्यात् तर्हि सैनिकेभ्यः आहारदानं विनायासं प्रचलेत्' इति विचिन्त्य सैनिकान् आज्ञापितवान् यत् एतां धेनुं माहिष्मतीं प्रति नयन्तु इति । एतत् ज्ञातवान् जमदग्निः विरोधं प्रकटितवान् । तदा दुष्टाः सैनिकाः तं पातयित्वा धेनुं बलात् ततः नीतवन्तः ।



# चतुरः बालकः दुष्टः राक्षसः च



आफ्रिकादेशस्य घनारण्ये कश्चन ग्रामः आसीत् । तत्र मोबुतः नाम कृषकः पत्न्या जेल्या, युवपुत्रेण एङनेन च सह निवसति स्म । मोबुतः ग्रामात् बहिः भूमिं समीकृत्य तत्र कसावानामकं कन्दम् आरोपितवान् । कसावाकन्देन निर्मितं व्यञ्जनं गृहजनाः विशेषतः इच्छन्ति स्म ।

कन्दस्य उन्मूलनकालः यदा सन्निहितः तदा कदाचित् मोबुतः पत्न्या सह कृषिक्षेत्रं गतवान् । कन्दसस्यानि दृष्ट्वा मोबुतः पत्नीम् अवदत् – ''श्वः कसावाकन्देन सज्जीकृतं व्यञ्जनं मांसेन सह खादितुम् अर्हामः'' इति ।

तदा पत्नी जेली अवदत् – ''का त्वरा भवतः ? कन्दस्य उत्मूलनस्य अनन्तरं स्वच्छीकरणादिकं प्रवर्तेत खलु ? श्वः तत्सर्वं कर्तुं न शक्यम् । परश्वः अहं व्यञ्जनं करिष्यामि'' इति ।

किन्तु अनन्तरदिने यदा तौ क्षेत्रं गतवन्तौ तदा महान् आघातः प्राप्तः ताभ्याम् । तत्र सस्यानि बहूनि उन्मूलितानि दृष्टानि । बहुषु सस्येषु कन्दाः न दृश्यन्ते स्म । 'सर्वं विनष्टम्' इति खेदेन अवदत् जेली ।

''एतत् केनचित् वन्यपशुना कृतम् इत्यत्र सन्देहः एव नास्ति'' इति अवदत् मोबुतः ।

'ते पशवः अस्माकम् अन्यानि कन्द-सस्यानि अपि यथा न नाशयेयुः तथा कोऽपि उपायः चिन्तनीयः' इति चिन्तयन्तौ तौ गृहं प्रत्यागतौ । मातापित्रोः मुखे स्थितां चिन्तारेखां दृष्ट्वा पुत्रः एङनः कारणम् अपृच्छत् । मोबुतः प्रवृत्तं सर्वम् अवदत् ।

सर्वं श्रुत्वा एङनः कञ्चित् उपायम् असुचयत् – ''कन्दादीन् खादित्वा गतवान्

सः वन्यपशुः पुनरपि क्षेत्रम् आगच्छेत् एव । तस्य आगमनस्य मार्गे अस्माभिः कश्चन गर्तः निर्मातव्यः । सः यदा गर्ते पतिष्यति तदा ग्रहीतव्यः । एतस्मात् अस्माकं क्षेत्रस्थानि सस्यानि रक्षितानि भवन्ति, खादनाय तस्य पशोः मांसम् अपि प्राप्यते' इति । एषा योजना मोबुतेन अङ्गीकृता । अतः सः गर्तनिर्माणाय पुनरपि क्षेत्रं प्रति प्रस्थित-वान् ।



क्षेत्रं गतः मोबुतः गर्तनिर्माणे उद्युक्तः जातः । अत्रान्तरे कश्चन दुष्टः राक्षसः तत्र आगतः । सः मोबुतं क्रोधेन अपृच्छत् - ''मदीये अरण्ये किम् एतत् क्रियते भवता ?'' इति ।

तं राक्षसं दृष्ट्वा मोबुतः नितरां भीतः, आश्चर्यचकितः च । सः एतस्य राक्षसस्य दुष्टताविषये श्रुतवान् आसीत् । किन्तु इतः पूर्वं कदापि सः न दृष्टः आसीत् तेन ।

''वन्यपशवः मम क्षेत्रस्थानि सस्यानि नाशयन्तः सन्ति । अतः तेषां ग्रहणाय अहं गर्तनिर्माणं कुर्वन् अस्मि'' इति उत्तरं दत्तवान् मोबुतः ।

''मम अनुमतिं विना भवता मदीये क्षेत्रे गर्तनिर्माणं क्रियमाणम् अस्ति । अतः अहं भवन्तं यमसदनं प्रति प्रेषयिष्यामि'' इति गर्जनपूर्वकम् अवदत् राक्षसः ।

तदा मोबतः दैन्येन अवदत् - ''महोदय, क्षन्तव्यः अहम् । अहं पत्नीपुत्रवान् अस्मि । तयोः पोषणं करणीयम् अस्ति मया । अतः कृपया मां मुञ्चतु'' इति ।

''अस्तु, एतदवसरे भवन्तं मुञ्चामि, यदि भवता मम नियमः पाल्येत । एतस्मिन् यदि पुम्पशुः पतेत् तर्हि सः भवते । यदि स्त्री-पशुः पतेत् तर्हि सः मह्यम् । किम् एषः नियमः अनुमन्यते भवता ?'' इति अपृच्छत् राक्षसः ।

मोबुतः राक्षसस्य नियमम् अङ्गीकृत्य गर्तं सम्यक् निर्माय शाखापर्णादिभिः सम्यक् आच्छाद्य गृहं गतवान् ।

अनन्तरदिने मोबुतः यावत् गर्तसमीपम् आगतः तावता राक्षसः अपि तत्र उपस्थितः आसीत् । मोबुतः गर्ते एकं वानरं पतितम् अपश्यत् । ''एषः पुमान्'' इति ससन्तोषम् अवदत् सः । राक्षसः किमपि अनुक्त्वा ततः प्रतिगतः ।

अनन्तरदिने अपि एवमेव जातम् । कश्चन हरिणः गर्ते प्राप्तः मोबुतेन । मोबुतः सन्तुष्टः आसीत् । एवं प्रतिदिनम् अपि कश्चन पुम्पशुः एव गर्ते प्राप्यते स्म ।

मासः अतीतः । कदाचित् मोबुतः शिरोवेदनया पीडितः अभवत् । अतः क्षेत्ररक्षणाय जेली क्षेत्रं गतवती । अन्धकारः प्रसृतः चेदपि सा न प्रत्यागता । तदा तस्याः अन्वेषणाय मोबुतः शय्यातः उत्थाय क्षेत्रं प्रति प्रस्थितः ।

''अहमपि भवता सह आगच्छामि'' इति वदन् एडनः अपि पित्रा सह प्रस्थित-वान् । ततः उभौ अपि क्षेत्रं प्राप्तवन्तौ । गर्तः उद्घाटितः दृष्टः ताभ्याम् । प्रमाद-वशात् तत्र पतिता आसीत् जेली ।

तावता तत्र उपस्थितः राक्षसः सहर्षम् अवदत् - ''एतदवसरे स्त्रीपशुः गर्ते दृश्यते । एषा मदीया'' इति ।

एतत् श्रुत्वा भीतः मोबुतः अवदत् - ''एतां भवान् स्वीकर्तुं नार्हति । एषा अस्ति मम पत्नी । भवान् स्त्रीपशुमात्रं स्वीकर्तुम् अर्हति'' इति ।

''मम दृष्ट्या मानवः अपि पशुः एव'' इति मन्दहासपूर्वकम् अवदत् राक्षसः ।

किम् उत्तरं वक्तव्यम् इति अजानन् मोबुतः म्लानवदनः सन् मौनेन अतिष्ठत् । बुद्धिमान् एडनः किञ्चित् विचिन्त्य राक्षसम् अवदत् - ''भवतु नाम । एषा भवदीया । भवान् गर्ते अवतीर्य एतां नयतु'' इति ।

''नैव । सर्वथा नैव । एडन ! किम् एतत् उच्यते भवता ? एतत् सर्वथा द्रष्टुं न इच्छामि'' इति उच्चैः अवदत् मोबुतः ।

''एषोऽहं तां स्वीकरिष्यामि'' इति वदन् राक्षसः सन्तोषेण गर्ते उत्कूर्दितवान् ।

''तात ! आगच्छतु तावत् । इदानीं गर्ते कश्चन पुम्पशुः प्राप्तः अस्ति । तम् आवां गृह्णीयाव'' इति अवदत् एडनः ।

इदानीं पुत्रस्य तन्त्रम् अवगतवान् मोबुतः सन्तोषेण उत्थाय - ''अहं सिद्धोऽस्मि'' इति अवदत् ।

सः गर्ते पतितं राक्षसं पश्यन् अवदत् - ''एतं वयम् अस्माकं दासं करवाम'' इति ।

राक्षसेन अवगतं यत् अहम् अपायगर्ते पतितः अस्मि इति । सः मोबुतस्य दासत्वं न इच्छति स्म । ''एतां भवन्तौ एव स्वीकुरुताम्'' इति उक्त्वा गर्ततः बहिः आगत्य शिरः अवनमय्य अरण्यं प्रति गतवान् सः । ततः मोबुतः एडनः च दण्डसाहाय्येन जेलीं गर्ततः उपरि आनीय सन्तोषेण तया सह गृहं प्रतिगतवन्तौ ।





# श्रेष्ठः आचार्यः

विलासपुरस्य शासकः रामभद्रः वृद्धः जातः । सः शासनभारं पुत्राय वीरभद्राय अर्पयन् अवदत् – ''यदा मया शासनम् आरब्धं तदा देशे अशिक्षितानां संख्या अधिका आसीत् । जनाः अन्धविश्वासग्रस्ताः आसन् । अतः देशे आधिक्येन विद्यालयाः आरब्धाः मया । राजधान्याम् अपि विद्यालयः कश्चन आरब्धः । दौर्भाग्यं नाम तस्य निमित्तं बहुधा अन्वेषणस्य अनन्तरम् अपि योग्यः शिक्षकः न लब्धः एव । तस्मात् मम मनः अद्यापि खिद्यते । तस्य विद्यालयस्य निमित्तं योग्यस्य अध्यापकस्य अन्वेषणं भवतः आद्यं कर्तव्यम्'' इति ।

पितुः आशयः पूरणीयः एव इति सङ्कल्प्य वीरभद्रः मन्त्रिणां सभाम् आयोज्य एतद्विषये दीर्घचर्चां कृतवान् । मन्त्रिणः विविधाः सूचनाः तु दत्तवन्तः । तासु कापि वीरभद्रस्य सम्मता न जाता ।

अन्ते वाचस्पतिनामकः वृद्धः मन्त्री उत्थाय अवदत् – ''विद्याभ्यासे येषाम् आसक्तिः भवति तेषां कृते योग्यं शिक्षणं दातव्यम्, ते अत्र विद्याभ्यासं प्राप्य देशस्य विविधेषु भागेषु विद्यालयानाम् आरम्भं कृत्वा विद्यायाः प्रसारं कुर्युः इति भवतः पितुः इच्छा आसीत् । योग्यः अध्यापकः प्राप्तः चेदेव एषा इच्छा पूर्णा भवेत्'' इति ।

''एतत् तु मया अपि अवगम्यते एव । किन्तु मम प्रश्नः यत् योग्यस्य अध्यापकस्य प्राप्तिः किमर्थं न जाता इति ? किम् अस्माकं देशे पण्डितानां कापि न्यूनता अस्ति ?'' इति अपृच्छत् वीरभद्रः ।

''यः पण्डितः भवति सः सर्वोऽपि योग्यः अध्यापकः भविष्यति एव इति न निश्चयः । इतः पूर्वं विविधेषु विद्यालयेषु पण्डिताः नियुक्ताः आसन् एव । तथापि श्रेष्ठः अध्यापकः तु न प्राप्तः । अतः योग्या परीक्षा

एव अत्र परिहारः भवेत्'' इति अवदत् वाचस्पतिः ।

एतत् युक्तम् अमन्यत राजा वीरभद्रः । अतः सः दक्षाणाम् अध्यापकानाम् अभिज्ञानाय देशे सर्वत्र दूतान् प्रेषितवान् । ततः तेन ज्ञातं यत् दण्डकारण्ये प्रशान्तः प्रसेनः चेति उभौ प्रकाण्डपण्डितौ स्तः, तौ शास्त्रनिपुणौ अध्यापनदक्षौ च इति । बहवः तरुणाः ताभ्याम् एतावता एव पण्डितरूपेण सज्जीकृताः आसन् ।

राजा मन्त्रिणं वाचस्पतिम् अवदत् यत् एतयोः अन्यतरः राजधान्याः विद्यालये नियुक्तः भवतु इति ।

तदा वाचस्पतिः अवदत् - ''अस्माकं विद्यालये अध्ययनं कृत्वापि ये विद्यावन्तः न जाताः तादृशाः दश जनाः एकैकस्मै अपि अर्पणीयाः । षण्मासाभ्यन्तरे ते विद्यावन्तः करणीयाः इति तौ सूचनीयौ । यः अत्र सफलः सः राजधान्याः विद्यालयस्य अध्यापकः भवतु'' इति ।

राज्ञे वीरभद्राय एषः प्रस्तावः अरोचत । अतः सः वाचस्पतिना यादृशाः स्वीकरणीयाः इति सूचितं तादृशान् दश छात्रान् प्रशान्ताय, तादृशान् एव अन्यान् दश छात्रान् प्रसेनाय च अर्पितवान् । प्रशान्तसमीपं ये प्रेषिताः तेषु दशसु षण्मासाभ्यन्तरे त्रयः शास्त्रनिपुणाः जाताः । प्रसेनसमीपं गतेषु दशशु सप्त शास्त्रनिपुणाः जाताः ।

वाचस्पतिः प्रसेनम् आदौ अपृच्छत् - ''ये शास्त्रनिपुणाः न जाताः, तेषां विषये भवतः अभिप्रायः कः ?'' इति ।



''ते त्रयः इह जन्मनि विद्यावन्तः भवितुं न अर्हन्ति । जडाः ते । अचेतनवत् सन्ति ते । शास्त्रनिपुणता मूर्खाणां तेषां ललाटे सर्वथा लिखिता नास्ति'' इति असन्तोषमिश्रितेन स्वरेण अवदत् प्रसेनः ।

एतदनन्तरं वाचस्पतिः प्रशान्तम् आहूय अपृच्छत् - ''ये सप्त जनाः शास्त्रनिपुणाः न जाताः तेषां विषये किं भवता वक्तव्यं किमपि अस्ति ?'' इति ।

तदा प्रशान्तः अवदत् - ''आर्य ! मम शिष्येषु त्रयः बुद्धिमन्तः सन्ति । अतः ते शीघ्रम् एव शास्त्रज्ञानं प्राप्तवन्तः । अन्ये सप्त ते इव महाबुद्धिमन्तः न । तथापि मम विश्वासः अस्ति यत् अग्रे वर्षाभ्यन्तरे एतान् अपि शास्त्रज्ञान् करिष्यामि अहम् इति । इदानीं यः कालः मह्यं दत्तः आसीत् सः एतदर्थम्

अपर्याप्तः आसीत्'' इति ।

ततः वाचस्पतिः राजानम् अवदत् - ''राजधानीविद्यालये प्रशान्तः एव आचार्यत्वेन नियुक्तः भवतु'' इति ।

एतत् श्रुत्वा आश्चर्यं प्रकटयन् राजा पृष्टवान् - ''मन्त्रिवर्य ! प्रसेनः षण्मासाभ्यन्तरे सप्त शिष्यान् शास्त्रज्ञान् कृतवान् । प्रशान्तः तु त्रीन् एव शास्त्रज्ञान् कृतवान् । तथापि प्रशान्तः एव आचार्यपदे नियोक्तव्यः इति वदति खलु भवान् ! किमर्थम् एवम् ?'' इति ।

तदा मन्त्री मन्दहासपूर्वकम् अवदत् - ''प्रभो ! असमर्थान् अपि षण्मासाभ्यन्तरे शास्त्रनिपुणान् कृतवन्तौ प्रसेनः प्रशान्तः च । अतः तौ उभौ अपि श्रेष्ठौ आचार्यौ इत्यत्र नास्ति एव सन्देहः । प्रसेनस्य छात्रेषु बुद्धिमन्तः अधिकाः आसन् । अतः सः तान् शास्त्रज्ञान् कृतवान् । यान् सः शास्त्रज्ञान् कर्तुं न शक्तवान् तान् सः निन्दितवान्, जडान् उक्तवान् च । प्रशान्तः तु तादृशान् जडान् न मतवान्, न वा निन्दितवान् । एतदवसरे त्रीन् मूर्खान् राजकुमारान् अध्यापितवतः विष्णुशर्मणः कथा स्मर्तव्या अस्माभिः'' इति ।

''विष्णुशर्मणा तु अपूर्वा एव सिद्धिः आसादिता । राजकुमाराणां शिक्षणाय तेन विशिष्टं तन्त्रम् आश्रितम् आसीत्'' इति अवदत् राजा ।

''आचार्यस्य वैशिष्ट्यम् एतादृशेन अंशेन एव निर्णीतं भवति । प्रशान्तस्य विश्वासः यत् वर्षाभ्यन्तरे सर्वान् शिष्यान् शास्त्रज्ञान् कर्तुं शक्यते इति । यः शिष्यान् जडान् अचेतनतुल्यान् च भावयति सः श्रेष्ठः आचार्यः भवितुं न अर्हति । अतः एव मया प्रशान्तः एव श्रेष्ठाचार्यत्वेन चितः'' इति विवृतवान् मन्त्री वाचस्पतिः ।

वाचस्पतेः चिन्तनं प्रशंसन् राजा प्रशान्तं राजधान्याः विद्यालयस्य आचार्यत्वेन नियुक्तवान् । एतस्य परिणामतः तस्मिन् विद्यालये अधीतवन्तः सर्वे शास्त्रज्ञाः जाताः, देशस्य विविधान् भागान् गत्वा विद्यादानकार्यं कृतवन्तः च ।

दिवं गतस्य महाराजस्य रामभद्रस्य स्वप्नः एवं साकारतां गतः । गच्छता कालेन देशे विद्यावतां संख्या विशेषतः प्रवृद्धा अपि ।





# भूस्वामिगृहे भोजनम्

कस्मिंश्चित् ग्रामे कश्चन भूस्वामी आसीत् । महागर्वः तस्य । ग्रामे अन्यः धनिकः न आसीत् । ग्रामजनाः सर्वे कृष्या कर्मकरवृत्त्या च जीवनं कुर्वन्ति स्म ।

भूस्वामी सामान्यानां सहवासं न इच्छति स्म । ''एते दुर्गन्धमयाः'' इति वदति स्म सः । अतः तेन सह सम्भाषणावसरे सर्वैः कृषिकैः सुदूरे एव स्थातव्यं भवति स्म ।

कदाचित् कृषिकाः विकत्थनं कुर्वन्तः आसन् - 'अद्य मया भूस्वामितः एतावद्दूरे स्थितम्', 'अद्य मया भूस्वामिनः पार्श्वे एव स्थितम्' इत्यादि । एतत् श्रुत्वा कुचेलः नाम कृषिकः उच्चैः हसित्वा अवदत् - ''किम् एतादृशेन विकत्थनेन ? यदि भूस्वामिनः गृहे भोजनं कर्तुं शक्येत तर्हि एव किमपि साधितं भवेत्'' इति ।

''तत् किं भवान् कर्तुं शक्नुयात् ?'' इति अपृच्छत् कश्चन कृषिकः ।

''कुतो न ? यदि पणबन्धः स्यात् तर्हि अवश्यं कुर्याम्'' इति अवदत् कुचेलः ।

''भवतः मुखस्य तेजः दृष्ट्वा एव भूस्वामी भूरिभोजनं दास्यति । एवं ननु ? भूस्वामी भवते गृहे प्रवेशम् अपि न दद्यात् । अर्धचन्द्रप्रयोगेण भवन्तं गृहात् निष्कासयेत् सः'' इति अवदत् अपरः ।

''तद्विषये अहं चिन्तयिष्यामि । किं पणबन्धाय भवन्तः सिद्धाः ?'' इति अपृच्छत् कुचेलः ।

''यदि भवान् तत्र भोजनं कर्तुं समर्थः भवेत् तर्हि शतप्रस्थमितं धान्यं वृषभयुगलं च दास्यते । यदि भवतः पराजयः भवेत् तर्हि अस्माभिः यत् कार्यम् उच्यते तत् करणीयं भवता आजीवनम् । विचिन्त्य निर्णयं करोतु'' इति उक्तवन्तः कृषिकाः ।

''अनुमन्यते मया'' इत्यवदत् कुचेलः ।

तस्मिन् एव दिने सः भूस्वामिनः गृहम् अगच्छत् । द्वारस्थाः रक्षकभटाः तस्य प्रवेशं निवारितवन्तः ।

"अहं भूस्वामिनं काञ्चित् शुभवार्तां वक्तुम् इच्छामि" इति अवदत् कुचेलः ।

"ताम् अस्मान् वदतु । वयं भूस्वामिनं वदिष्यामः" इति अवदन् रक्षकभटाः ।

"मया एव सः स्वयं वक्तव्यः । तादृशी शुभवार्ता सा" इति अवदत् कुचेलः ।

रक्षकाः भूस्वामिनम् एतां वार्ताम् उक्तवन्तः । सा का इति शीघ्रं ज्ञातव्यम् इति भावः उत्पन्नः भूस्वामिनः मनसि । अतः सः कुचेलम् अन्तः आनायितवान् ।

"भवता श्रावयितुम् इष्टा सा शुभवार्ता का ?" इति अपृच्छत् भूस्वामी ।

"ताम् एकान्ते वक्तुम् इच्छामि" इति उक्तवान् कुचेलः । भूस्वामिनः कुतूहलं प्रवृद्धम् । सः सेवकान् ततः प्रेषितवान् ।

ततः कुचेलः अपृच्छत् - "अश्वशिरोगात्रकस्य सुवर्णस्य किं मूल्यम् ?" इति ।

"किमर्थम् एतत् विवरणम् आवश्यकं भवते ?" इति पृष्टवान् भूस्वामी ।

तदा कुचेलः अवदत् - "विशेषकार्यार्थं तत् आवश्यकम्" इति ।

"तत् विशेषकार्यं किम् ?" इति पुनः पृष्टवान् भूस्वामी ।

कुचेलः दीर्घं निश्श्वस्य - "भवान् झटिति वक्तुं न शक्नुयात् । अस्तु नाम । महती बुभुक्षा मम । अतः गृहं गत्वा भोजनं कृत्वा आगमिष्यामि" इति अवदत् ।

भूस्वामी तस्य गमनं न ऐच्छत् । 'अश्वशिरोगात्रकं सुवर्णं हस्तच्युतं न भवेत्' इति विचिन्त्य सः सेवकान् आज्ञापितवान् - "एतं भोजनार्थं नयन्तु" इति ।

सेवकाः तथैव कृतवन्तः । कुचेलस्य भोजनस्य अनन्तरं भूस्वामी पुनः अपृच्छत् - "तत् अश्वशिरोगात्रकं सुवर्णम् आनयतु । भवते योग्यम् उपायनं दास्यामि" इति ।

"सुवर्णम् ! कुत्र अस्ति सुवर्णम् ? शतप्रस्थमितधान्य-वृषभयुगलयोः, अश्वशिरोगात्रकस्य सुवर्णस्य च मूल्यं समानं भवेत् किम् इति ज्ञातुम् इष्टवान् आसम् अहम्" इति अवदत् कृषिकः ।

"धूर्त ! इतः परं क्षणम् अपि अत्र मा तिष्ठतु भवान्" इति गर्जितवान् भूस्वामी ।

कुचेलेन न केवलं जयः, अपि तु शतप्रस्थमितं धान्यं वृषभयुगलं चापि प्राप्तम् ।



# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

शान्तिपुरस्य सिंहासनं वशीकृतवान् वीरसिंहः निराशः अस्ति । नन्दिनीनद्याम् आगतः प्रवाहः सैनिकान् आयुधानि च अनयत् । अतः अमृतपुरस्य वशीकरणाय कृतः यत्नः विफलः । भूस्वामिभ्यः तण्डुलान् वशीकृत्य आयुधानां क्रयणाय तेषां विक्रयणं करणीयम् इति वीरसिंहस्य योजना । जनाः एतस्य विरोधं कुर्वन्ति । बलात् तण्डुलान् नयतः सैनिकान् अवरुध्य ते राजधानीं प्रत्यागच्छन्ति ।

चित्रम् - गान्धि-अय्यः

करूपेण तण्डुलस्य सङ्ग्रहाय कृतः यत्नः विफलः इत्यतः वीरसिंहः क्रुद्धः ।

ते दुष्टाः लुण्ठाकाः अवश्यं ग्रहीतव्याः ।

वयं तान् दण्डयिष्यामः ।

भूस्वामिभिः नूतनकररूपेण ते तण्डुलाः दत्ताः आसन् ।

नूतनः करः ?

भूस्वामिभिः करः दातव्यः ?

किमर्थम् ?

वयं तण्डुलं विक्रीय अस्त्रशस्त्राणि, क्रेष्यामः ।

अस्मभ्यम् अस्त्रशस्त्राणि आवश्यकानि किमर्थम् ?

रे मूर्ख ! अस्त्रशस्त्राणि युद्धाय खलु आवश्यकानि भवन्ति ?




तावता वातायनात् एकः बाणः आगत्य भित्त्या घट्टितः सन् भूमौ पतति । सः कश्चित् सन्देशं वहति इति तु सुस्पष्टम् ।






निराशः सन् अमरसिंहः प्रतिनिवर्तते । वीरसिंहेन क्रियमाणम् अपमाननं सोढुं न शक्नोति सः ।

महाराज ! एतस्मिन् वस्त्रे किमपि लिखितं दृश्यते ।

वयं न लुण्ठाकाः । भवदीयाः अस्माकं तण्डुलं नयन्तः आसन् । अस्त्रशस्त्रादीनि खादनयोग्यानि न खलु ?

एतस्मिन् पत्रे मदीयाः एव शब्दाः पुनरुक्ताः सन्ति । एतस्मिन् आस्थाने कोऽपि शत्रुपक्षीयः अस्ति ।

सः दुष्टः कः आसीत् ? किं भवद्भिः सः गृहीतः ?

न महाराज ! अस्माकं प्रयत्नात् पूर्वम् एव सः पलायितवान् आसीत् ।


कश्चन अश्वारोही राजभवनं प्रविश्य कथं पलायेत ? रक्षकान् परिवर्तयतु ।
किमपि कुतन्त्रं प्रवर्तमानम् अस्ति ।


सीमाद्वाराणि पिहितानि भवन्तु । सर्वत्र रक्षणार्थं सैनिकाः स्थापिताः भवन्तु ।
अस्तु महाराज !


अमरसिंहः दलपतीनां गोष्ठीम् आयोजयति ।
कस्मिंश्चिदपि क्षणे प्रतिवेशिराज्यस्य वशीकरणाय अस्माभिः गन्तव्यं भवेत् ।


सैनिकाः युद्धाय अभ्यासम् आरभन्ते ।


कोऽपि अनधिकृतप्रवेशी ।
मया मानवेन्द्रः अवश्यं सूचनीयः ।
अनुवर्तते

# कार्यानस्य उपयोगी संविभागः

वीणा बहट्टात्मके भवने भूमितले निवसति । तस्मिन् तले आहत्य चत्वारि गृहाणि ।

तस्याः गृहस्य दक्षिणभागे दत्त-वर्यस्य गृहम्, वामाभागे जार्ज-वर्यस्य गृहम् । तस्याः गृहस्य पुरतः खानवर्यस्य गृहम् अस्ति । चतुर्णाम् अपि गृहस्वामिनां कार्यानम् अस्ति । ते चत्वारः अपि कार्यालयं कार्यानेन गच्छन्ति । तेषां कार्यालयाः परस्परम् अनतिदूरे एव सन्ति ।



वीणया कश्चन विशिष्टः अंशः लक्षितः । तस्याः पिता मासे सप्ताहं यावत् स्वस्य कार्यानं नयति कार्यालयं प्रति । अन्येषु त्रिषु सप्ताहेषु तत् कार्यानं यानप्रकोष्ठे एव तिष्ठति ।

सा एतद्विषये सखीभिः सह समालोचनं कृतवती । तस्मात् तया तस्य रहस्यं ज्ञातम् । यस्मिन् सप्ताहे वीणायाः पिता कार्यानं नयति तस्मिन् सप्ताहे दत्तः, जार्जः, खानः च पित्रा सहैव गच्छन्ति इति । अपरस्मिन् सप्ताहे दत्तः स्वस्य कार्यानं नयति । तदा अन्ये त्रयः तेन यानेन गच्छन्ति । एवमेव खानजार्जविषये अपि । एवम् एकः यदा कार्यानं नयति तदा अन्ये त्रयः तदीयेन कार्यानेन एव गच्छन्ति स्म ।

'स्वकीये कार्याने सत्यपि किमर्थं भवद्भिः अन्यस्य यानेन गम्यते ?' इति पृष्टवती वीणा ।

तदा पिता अवदत् - ''इन्दनतैलं वस्तुतः अमूल्यं दुर्लभं च । यदि परस्परसहकारेण कार्यानस्य उपयोगः चिन्त्यते तर्हि इन्धन-तैलस्य महान् सञ्चयः भवितुम् अर्हति । एतस्मात् अस्माकं सर्वेषां धनस्यापि सञ्चयः भवति । परिसरमालिन्यम् अपि न्यूनीकृतं भवति । यदि मार्गे सञ्चरतां कार्यानादीनां सङ्ख्यायां न्यूनता भवति तर्हि यातायातसमस्या अपि न्यूना भविष्यति'' इति ।

''अहो, उत्तमं चिन्तनम् एतत् !'' इति उक्तवती वीणा ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थकं विज्ञानम्

### भास्कराचार्यः



भास्कराचार्यः भारतीयेषु गणितज्ञेषु प्रसिद्धः । सः १११४ तमे क्रिस्ताब्दे 'विजयदबीडु' इत्यत्र जन्म प्राप्तवान् । एषः प्रदेशः कर्णाटके सह्यपर्वतसमीपे अस्ति । तस्य पिता महेश्वरः ज्योतिषिकः आसीत् ।

भास्कराचार्येण स्वस्य त्रिंशत्तमे वयसि 'सिद्धान्तशिरोमणि'नामकः उत्कृष्टः ग्रन्थः रचितः । एतस्मिन् चत्वारः भागाः सन्ति । 'लीलावती' तेषु अन्यतमः भागः । लीलावती अङ्कगणितं ज्यामितिं च आधारीकृत्य रचिता । सिद्धान्तशिरोमणिग्रन्थे सङ्कलनं, व्यवकलनं, गुणनं, भाजनं, वर्गघनप्राप्तिः वर्गमूलघनमूल-प्राप्तिः इत्यादयः, संख्याक्रम-शून्यव्यवस्था-परिवृत्त्यादयः च विस्तरेण उपवर्णिताः ।

## परिसरवैचित्र्यम्

### वृष्ट्यर्थं मण्डूकपूजा !

यदि ऋतुवातः समये न आगच्छति तर्हि जनाः वृष्टेः आनयनाय विविधान् प्रक्रमान् कुर्वन्ति । तेषाम् ऊहाशक्तिः सर्वासु दिक्षु प्रसरति ।

उत्कलराज्ये 'बेङ्के नानी नाचा'नामकं मण्डूकनृत्यं क्रियते । एतत् वृष्टिकारकम् इति तत्रत्याः मन्यन्ते ।

जनाः एकं मण्डूकं गृहीत्वा जलयुक्ते घटे स्थापयित्वा घटस्य मुखम् आवरणेन पिधाय तं घटं दीर्घे वेणुदण्डे बध्नन्ति । द्वौ पुरुषौ तं वेणुदण्डं वहतः । आबालवृद्धं सर्वे नृत्यन्तः



तौ अनुसरन्ति । ग्रामात् अनतिदूरे स्थिते मन्दिरे पूजा प्रचलति । तदनन्तरं सः मण्डूकः नद्यां कासारे वा त्यज्यते । एतस्मात् वृष्टिः भविष्यति इति तेषां विश्वासः ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### स्त्रीजातिः एव निषिध्यते अत्र

अद्यत्वे महिलाः सर्वेषु अपि क्षेत्रेषु पुरुषैः सह स्पर्धमानाः सन्ति समानतां प्राप्तुम् । केषुचित् क्षेत्रेषु समानसामर्थ्यं ताभिः प्रदर्शितम् अस्ति अपि ।

किन्तु मौण्ट् ओथस्प्रदेशे स्थिते ग्रीक्मठे स्त्रीजातिः एव निषिद्धा अस्ति । एषः निषेधः महिलानाम् एव इति भवन्तः चिन्तयेयुः । किन्तु न केवलं महिलानाम्, अपि तु समग्रायाः स्त्रीजातेः एव निषेधः अस्ति तत्र ।

तत्र पुरुषाः प्रवेशम् अर्हन्ति, न महिलाः । कुक्कुटानां प्रवेशः अस्ति तत्र, न तु कुक्कुटीनाम् । एवमेव अश्ववृषभादयः तत्र प्रवेशम् अर्हन्ति, किन्तु अश्वाधेन्वादयः न । सप्तशताधिकवर्षेभ्यः एषः सम्प्रदायः अनुस्त्रियमाणः अस्ति तत्र !




## अभिवर्ध्यतां ज्ञानशक्तिः

### पारम्परिकक्षेत्राणि



१. हैदराबादस्थः चार्मिनार् कम् अंशं स्मारयति ?

२. नवदेहल्यां स्थितं 'भारतद्वारं' भारतीयसैनिकानां स्मरणाय निर्मितम् । एतादृशम् एव अन्यत् स्मारकम् अस्ति । तत् किम् ?

३. अमृतसरस्थस्य सुवर्णमन्दिरस्य निर्माणं केनचित् सिक्खगुरुणा आरब्धम् । तस्य समापनम् अन्येन कृतम् । तौ गुरू कौ ?

४. देहल्यां हुमायूनस्य स्मारकं कयाचित् चक्रवर्तिपत्न्या निर्मितम् । तस्याः नाम किम् ?

५. मुम्बयीसमीपे स्थिते द्वीपे विद्यमानानां गुहानां नाम किम् ? ताः गुहाः केन राजवंशेन निर्मिताः ?

(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-
सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं
भवन्तः प्रेषयितुं शक्नुयुः ?



S. BALASUBRAMANIAN



ANANTHA PRABHAKARA DUTTA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'मे'मासस्य चित्रशीर्षिकाप्रेषकः -**
**सोमशि सत्यनारायणमूर्तिः**
एल्.ऐ.जि. २, ६०, ए.पि.एच्.बि. कालोनी
पालाकोल - ५३४ २६० प.गो. जिल्ला
(आ.प्र.)

## पुरस्कृता शीर्षिका





धन्योऽस्मि अहं सूक्ष्मदर्शनतः
धन्योऽस्म्यहमपि जालनिर्माणात् ।

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. हैदराबादनगरे जातां प्लेगदुर्घटनाम् ।
२. अमरजवानज्योतिः (भारतपाकयुद्धानन्तरं १९७१तमे वर्षे निर्मितम्)
३. गुरुः रामदासः, गुरुः अर्जुनदेवः च ।
४. हमीदाबेगम् इति ।
५. एलिफण्टागुहाः इति । राष्ट्रकूटवंशीयैः ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# चन्दमामा

प्रस्तौति

# ‘स्वप्नदर्शी बालो भव’ स्पर्धा

*भारतस्य राष्ट्राध्यक्षः डा॰ ए.पि.जे.अब्दुल्कलामवर्यः बालैः सह सम्भाषणावसरे तान् प्रबोधयति यत् देशस्य, देशस्थानां च भविष्यतः विषये स्वप्नदर्शिनो भवन्तु इति । गतस्य जनवरीमासस्य २५ तमे दिनाङ्के राष्ट्रम् अभिसम्बोधयन् सः बालान् उद्दिश्य दशविधाः प्रतिज्ञाः उपस्थापितवान् । ताश्च –*

१. अहं मम शिक्षणम् अनुवर्तयिष्यामि, श्रद्धया कार्यं कृत्वा स्वस्य श्रेष्ठतां सम्पादयिष्यामि वा ।

२. अहं दश अशिक्षितान् वा पठनं लेखनं च बोधयिष्यामि ।

३. अहं दश वा सस्यानि आरोप्य तेषां पालनं पोषणं च सम्यक् करिष्यामि ।

४. अहं ग्रामान् नगराणि च गत्वा पञ्च वा जनान् द्यूत-मद्यपानव्यसनतः मुक्तान् विधास्यामि ।

५. अहं दुःखितानां मम देशबान्धवानां वेदनायाः निवारणार्थं निरन्तरं कार्यं करिष्यामि ।

६. अहं जाति-मत-भाषादीनि विभाजकतत्त्वानि न प्रोत्साहयिष्यामि ।

७. अहं सत्यशीलः सन् भ्रष्टाचाररहितं समाजं निर्मातुं प्रयत्नं करिष्यामि ।

८. अहम् उद्दीप्तज्ञानः पौरः भवितुं प्रयतिष्ये, मम कुटुम्बजनान् न्यायाचारपरान् करिष्ये च ।

९. अहं शरीरेण मनसा च विकलानां सुहृत् भविष्यामि । ते साधारणजनाः इव भवितुं यथा शक्नुयुः तथा करिष्यामि ।

१०. अहं मम देशस्य देशस्थानां च यशस्वितां सगर्वं मनसि धरिष्यामि ।

**उपर्युक्तेषु अंशेषु अधिकाधिकान् अंशान् अधिकृत्य अग्रिमात् स्वातन्त्र्यदिनात् पूर्वं यत्किञ्चित् आत्मना कर्तुं शक्येत तत् अस्मभ्यं लिखित्वा प्रेषयन्तु इति बालान् अभ्यर्थयते चन्दमामा । प्रतिविषयम् एकः अनुच्छेदः लेखनीयः । उत्तमाः त्रयः लेखाः नवेम्बर्सञ्चिकायां प्रकाशयिष्यन्ते ।**

## भागवहनाय नियमाः

● अधिकाष्टवर्षीयाः ऊनपञ्चदशवर्षीयाः बालाः अत्र भागं वोढुम् अर्हाः । ● चन्दमामा याभिः भाषाभिः प्रकाश्यते तासु अन्यतमया आंग्लभाषया वा लिखितः भवेत् लेखः । एकः एकमेव प्रवेशपत्रं प्रेषयितुम् अर्हति । ● भागग्राहिणा अन्यसाहाय्यं विनैव लिखितम् इति पालकैः लिखितं संस्तुतिपत्रम् अपि प्रवेशपत्रेण सह प्रेषणीयम् । ● प्रतिभाषं त्रीणि पारितोषिकाणि – रू.५००/- रू. २५०/- रू. १००/- चेति । प्रमाणपत्रम् अपि दास्यते । ● लेखेन सह अधोनिर्दिष्टम् आवेदनपत्रम् अपि अवश्यं प्रेषणीयम् । ● अन्तिमः दिनाङ्कः – ३१ अगस्ट् – २००४ । विलम्बेन प्रेषितं पत्रं पारितोषिकार्हत्वेन न परिगणयिष्यते ।

---

## ‘स्वप्नदर्शी बालो भव’स्पर्धा

नाम ........................................................................ वयः ................कक्ष्या ..............................................

विद्यालयः ..............................................................................................................................

गृहसङ्केतः ..............................................................................................................................

.......................................... पिन् ........................................ दूरवाणी.......................................................

एतेन सह स्थितः ............................................................ इत्याख्यः लेखः मम पुत्रेण / पुत्र्या स्वप्रयत्नेन एव लिखितः ।

भागग्रहीता | पालकः

